॥ श्रीः ॥



# तर्कसंग्रहः ।

पण्डितवर श्रीमदन्नं भट्ट विरचितः

गोवर्द्धन पंडित कृता न्यायबोधिनी

चन्द्रजसिंह पंडित कृतं च पदकृत्यम्

इति व्याख्याद्वयेन संयुतः

काशीस्थ

निर्मल पण्डित गोविन्दसिंहापरनामक-

गण्डासिंह साधु कृत

विषमस्थल टिप्पणोपेतः तेनैव च संशोधितः

सच

गोवर्द्धनरामेण धनिना

"तारा यन्त्रालय" नाम्नि मुद्रायन्त्रे

मुम्बई

भवनिर्णय सागरीय सीसाक्षरै-

र्मुद्रायित्वा प्रकाशितः

संवत् १९६१



BENARES.

श्रीः ।

# तर्कसंग्रहः ।

पण्डितवर श्रीमदन्नं भट्ट विरचितः
गोवर्द्धन पण्डित कृता न्यायबोधिनी,
चन्द्रजसिंह पण्डित कृतं च पदकृत्यम्
इति व्याख्याद्वयेन संयुतः ।

काशीस्थ
निर्मल पण्डित गोविन्दसिंहा परनामक गण्डासिंहसाधु
कृत विषमस्थल टिप्पणोपेतः तेनैव च संशोधितः

---

सच
गोवर्द्धनरामेणधनिना
"तारा यन्त्रालय" नाम्नि मुद्रायन्त्रे
मुम्बई



भव निर्णय सागरीय सीसाक्षरै-
र्मुद्रयित्वा प्रकाशितः ।

---

सम्वत् १९६१ ।



BENARES.

# सटीकतर्कसंग्रहलक्ष्यपदानाम-नुक्रमणिकेयम् ।

—:o:—

इति अनुक्रमाणिका समाप्ता ।

॥ श्रीः ॥

॥ श्रीगणेशाय नमः ॥

# तर्कसंग्रहः ।

निधाय हृदि विश्वेशं विधाय गुरुवन्दनम् ।
बालानां सुखबोधाय क्रियते तर्कसंग्रहः ॥

न्यायबोधिनी ।

निखिलागमसञ्चारि(१)श्रीकृष्णाख्यं परं महः ।
ध्यात्वा गोवर्द्धनसुधीस्तनुते न्यायबोधिनीम् ॥१॥

चिकीर्षितस्य(२) ग्रन्थस्य निर्विघ्नपरिसमाप्त्यर्थमिष्टदेवता नमस्कारात्मकं मङ्गलं शिष्यशिक्षार्थं ग्रन्थतो निबध्नाति(३)—निधायेति ॥

पदकृत्यम् ।

श्रीगणेशं नमस्कृत्य पार्वतीशङ्करं परम् ।
मया चन्द्रजसिंहेन क्रियते पदकृत्यकम् ॥१॥

---

१ आगमसञ्चारित्वं नामप्रतिपाद्यतासम्बन्धेनागमेषु विद्यमानत्वम् ॥

२ कर्तुमिच्छाचिकीर्षातद्विषयीभूतस्य ग्रन्थस्येत्यर्थः ॥

३ प्रतिपाद्यतावच्छेदक कोटिप्रवेशनानुकूलोव्यापारोनिपूर्वक बन्धधातोरर्थः ॥

विश्वेशं जगत्कर्त्तारं श्रीसाम्बमूर्त्तिं हार्दे मनसि नि-धाय नितरां धारयित्वा गुरुवन्दनं च विधाय कृत्वा–इ-त्यर्थः ॥ बालेति ॥ अत्राधीतव्याकरणकाव्यकोशोऽनधी-तन्यायशास्त्रो बालः । व्यासादावतिव्याप्तिवारणाय–'अ-नधीतन्याय' इति ॥ स्तनधयेऽतिप्रसक्तिवारणाय–'अधी-तव्याकरण' इति ॥

"यस्मादिदमहं मन्ये बालानामुपकारकम् ।
तस्माद्धितकरं वाक्यं प्रवक्तव्यं सता सदा ॥"

सुखेति ॥ सुखेनानायासेन(१)बोधाय 'पदार्थतत्त्वज्ञाना-

---

१ श्रोतृप्रवृत्त्यर्थं ग्रन्थादौविषयप्रयोजनाधिकारिसम्बन्धाइति चत्वारोऽनुबन्धाः प्रदर्शनीयाभवन्तिअप्रदर्शनेचग्रन्थकारस्यन्यून-तास्यादतोमूलादेवतान् बोधयन् मूलं विवरणयति पदार्थतत्त्वज्ञाना-येति ॥ तथाच पदार्थतत्त्वज्ञानमेवप्रयोजनं सूचितम् ॥ द्रव्यादि-सप्तपदार्थाश्चविषयाः ॥ पदार्थतत्त्वावधारणाभीप्सुरधिकारी ॥ स-म्बन्धाश्चविषयग्रन्थयोः प्रतिपाद्यप्रतिपादकभावः ॥ अधिकारि-ग्रन्थयोश्चबोध्यबोधकभावः ॥ अधिकारिविषययोश्च ज्ञातृज्ञातव्य-भावइत्येवं रूपानानाविधाः सन्ति ॥ अनुबन्धत्वञ्चग्रन्थप्रवृत्तिप्र-योजकज्ञानविषयत्वम् ॥ परमस्यशास्त्रस्यमोक्षएवप्रयोजनम् स-चात्यन्तकीदुःखनिवृतिः ॥ दुःखानिचषडिन्द्रियाणि ॥ षड्विष-याः ॥ षड्बुद्धयः शरीरं सुखं दुःखञ्चेत्येकविंशति संख्याका-नि ॥ एतेषांनिवृतिक्रमश्चेत्थम् शास्त्रेणतत्त्वज्ञानं भवतितेनचमिथ्या-ज्ञानस्यनाशः ॥ ततोरागद्वेषादि दोषाणां नाशः ॥ ततः प्रवृत्तेर-नुत्पादः ॥ ततोजन्मानुत्पत्तिः ॥ ततोदुःखानुत्पाद इति ॥

यइत्यर्थः ॥ तर्क्यन्ते प्रमितिविषयीक्रियन्ते' इति तर्का द्रव्यादिसप्तपदार्थाः, तेषां संग्रहः संक्षेपणोद्देशलक्षणपरीक्षा यस्मिन् स ग्रन्थः ॥ नाममात्रेण वस्तुसङ्कीर्त्तनम् उद्देशः । यथा—'द्रव्यगुण—'इति ॥ असाधारणधर्मो(१) लक्षणम् । यथा–गन्धवत्त्वं पृथिव्याः । 'लक्षितस्य लक्षणं सम्भवति न वा' इति विचारः परीक्षा ॥ 'अत्रोद्देशस्य पक्षज्ञानं फलम् लक्षणस्य इतरभेदज्ञानम् ॥ परीक्षाया लक्षणदोषपरिहारः—' इति मन्तव्यम् ॥

**द्रव्यगुणकर्मसामान्यविशेषसमवायाभावाः सप्तैव पदार्थाः ।**

(न्याय०) अथ पदार्थान् विभजते(२)–'द्रव्य' इति ॥ अत्र सप्तग्रहणं 'पदार्थत्वं द्रव्याद्यन्यतमत्वव्याप्यम्'(३)इति व्याप्तिलाभाय ॥ ननु "शक्तिपदार्थस्याष्टमस्य विद्यमानत्वात् कथं 'सप्तैव इति ॥ तथाहि ॥ वह्निसंयुक्तेन्धनादौ सत्यापि मणिसंयोगे दाहो न जायते, तच्छून्ये जायते ॥ अतो 'मणिसमवधाने शक्तिर्नश्यति, मण्यभावदशायां दाहानुकूलाशक्तिरुत्पद्यते' इति कल्प्यते ॥ तस्माच्छक्तिरतिरिक्तः

१ धर्मे असाधारणत्वञ्चान्यूनानतिरिक्तवृतित्वमितिबोध्यम् ॥

२ तद्धर्मावान्तरधर्मपुरस्कारेण धर्मिप्रतिपत्त्यनुकूलोव्यापारो विपूर्वकभजधात्वर्थः ।

३ द्रव्यादिसप्तान्यतमत्वंच द्रव्यादिभेदसप्तकाभाववत्वम् प्रत्येकव्यक्तिप्रसिद्धानां द्रव्यादि भेदानां सप्तानां कुत्राप्यसत्वेन तादृशभेदसप्तकत्वाभावस्यसर्व्वत्रसत्वान्नदोष इतिभावः ॥

पदार्थः " इति चेत् ॥न॥ मणेः प्रतिबन्धकत्वेन(१)तदभावस्य(२) कारणत्वेनैव निर्वाहे मणिसमवधानासमवधानाभ्यामनन्तशक्ति तत् ध्वंस तत्प्रागभावकल्पनाया अन्याय्यत्वात् ॥ तस्मात् 'सप्तैव' पदार्था इति ॥

**तत्र द्रव्याणि पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसि नवैव ।**

(न्याय०) द्रव्याणि विभजते–'पृथिवी'इति ॥ ननु "अन्धकारस्य दशमद्रव्यस्य सत्वात् कथं 'नवैव' इति ॥ तथाहि-'नीलं तमश्चलति'इति प्रतीतेर्नीलरूपाश्रयत्वेन क्रियाश्रयत्वेन च द्रव्यत्वं सिद्धम् । न च 'क्लृप्तद्रव्येष्वन्तर्भावात्कुतो दशमद्रव्यत्वम्' इति वाच्यम् ॥ आकाशादिपञ्चकस्य नीरूपत्वात्तमसो नीलरूपत्वाद्वायोरपि नीरूपत्वान्न तेष्वन्तर्भावः, तमसो निर्गन्धत्वान्न पृथिव्यामन्तर्भावः सम्भवति, जलतेजसोः शीतोष्णस्पर्शवत्त्वान्न तयोरन्तर्भावः ॥ तस्मात्तमसो दशमद्रव्यत्वं सिद्धम्" इति चेत् ॥ न ॥ तेजसोऽभावेनैवोपपत्तावतिरिक्तकल्पनायां मानाभावात् ॥ न च "विनिगमनाविरहात्(३) तेज एवान्धकाराभावस्वरूपम्" इति वाच्यम् ॥

---

१ प्रतिबन्धकत्वञ्चकार्य्यकार्य्यानुकूलधर्म्मान्यतर विघटकत्वमिति ॥

२ प्रतिबन्धकाभावस्य ॥

३ एकत्रपक्षपातिनीयुक्तिर्विनिगमना तस्याविरहादभावादेवेत्यर्थः॥

तेजसोऽभावस्वरूपत्वे सर्वानुभूतोष्णस्पर्शस्याश्रयत्वबाधात् द्रव्यान्तरकल्पने गौरवात् ॥ तस्मादुष्णस्पर्शगुणाश्रयतया तेजसो द्रव्यत्वं सिद्धम् । तमसि (१) नीलरूपप्रतीतिस्तु भ्रान्तिरेव दीपासरणक्रियाया एव तत्र भानात् ॥

(पदकृत्य०) तत्रेति ॥ तत्र 'सप्तपदार्थमध्ये' इत्यर्थः ॥ द्रव्याणि नैवेव इत्यन्वयः ॥ एवं 'तत्र' इति पदं 'चतुर्विंशति गुणाः' इत्यादिष्वप्यन्वेति ॥ द्रव्यत्वजातिमत्त्वं (२) 'गुणवत्त्वं समवायिकारणत्वं' वा द्रव्यसामान्यलक्षणम् ॥

**रूपरसगन्धस्पर्श संख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वगुरुत्वद्रवत्वस्नेहशब्दबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्म संस्काराश्चतुर्विंशतिगुणाः ॥**

**उत्क्षेपणापक्षेपणाकुञ्चन प्रसारणगमनानि पञ्चकर्माणि ॥ परमपरं चेति द्विविधं सामान्यम् ॥**

(पद०) परमपरं चेति ॥ परसामान्यम्, अपरसामान्यम्

---

१ नचाभावे रूपकर्मणोऽभावात्कथं तेजोऽभावे तमसि रूपवत्ताप्रतीतिरित्यत आह ।

२ प्रथमलक्षणे लक्षण लक्ष्यतावच्छेदकयोरभेदत्वेनोद्देश्यतावच्छेदक विधेययोरैक्याच्छाब्दबोधानुमित्योरनु पपत्तिरतो द्वितीयं लक्षणं द्वितीयमपिउत्पत्तिकालावाच्छिन्ने घटादावव्याप्तमतस्तृतीयमाहसमवायिकारणेति ॥

इत्यर्थः ॥ परत्वं चाधिकदेशवृत्तित्वम् ॥ अपरत्वं च न्यून-देशवृत्तित्वम् ॥

नित्यद्रव्यवृत्तयो विशेषास्त्वनन्ता(१) एव ॥ समवायस्त्वेक(२) एव ॥ अभावश्चतुर्विधः(३) । प्रागभावः प्रध्वंसाभावोऽत्यन्ताभावोऽन्योन्याभावश्चेति ॥

गन्धवती पृथिवी । सा द्विधा—नित्याऽनित्या च । नित्या परमाणुरूपा । अनित्या कार्यरूपा । पुनस्त्रिविधा—शरीरेन्द्रियविषयभेदात् । शरीरमस्मदादीनाम् । इन्द्रियं गन्धग्राहकं(४) घ्राणं नासाग्रवर्ति । विषयो मृत्पाषाणादिः ॥

(न्यायबो०) गन्धवतीति ॥ गन्धवत्त्वं(५) पृथिव्या

---

१ विशेषत्वं नामस्वतोव्यावर्तकत्वं स्वीकरणञ्च तस्यनिरवयवद्रव्यव्यावृत्त्यर्थम् ॥

२ समवायत्वं नामानित्यसम्बन्धत्वम् ॥

३ अभावत्वं नामप्रतियोगिज्ञानाधीनज्ञानविषयत्वम् ॥ भावत्वञ्च समवायैकार्थसमवायान्यतर सम्बन्धेनसत्तावत्वम् ॥

४ गन्धविषयकसाक्षात्कारजनकम् ॥

५ गन्धवती पृथिवीत्यत्रगन्धवत्व पृथिवीत्वयोरुभयोरपि साम्येनसुपरिचितत्वादुद्देश्य विधेय भावस्य विवेक्तुमशक्यतयागन्धवत्वं पृथिव्यालक्षणमित्युक्तिः ॥

लक्षणम् ॥ लक्ष्या पृथिवी ॥ पृथिवीत्वं लक्ष्यतावच्छेदकम् ॥ यद्धर्मावच्छिन्नं लक्ष्यं, स धर्मो लक्ष्यतावच्छेदकः ॥ यो धर्मो यस्या अवच्छेदकः सा तद्धर्मावच्छिन्ना ॥ तथा च लक्ष्यतावच्छेदकं पृथिवीत्वं चल्लक्ष्यता पृथिवीत्वावच्छिन्ना ॥ एवं शीतस्पर्शवत्त्वादिलक्षणेषु जलत्वादीनां लक्ष्यतावच्छेदकत्वं बोध्यम् ॥

(पद०) तदेव हि लक्षणम्, यदव्याप्त्यतिव्याप्त्यसम्भव रूपदोषत्रयशून्यम् ॥ यथा गोः सास्नादिमत्त्वम् ॥ अव्याप्तिश्च लक्ष्यैकदेशावृत्तित्वम् ॥ अत एव गोर्न कपिलत्वं लक्षणम्, तस्याव्याप्तिग्रस्तत्वात् ॥ अतिव्याप्तिश्च लक्ष्यवृत्तित्वे सत्यलक्ष्यवृत्तित्वम् ॥ अत एव गोर्न शृङ्गित्वं लक्षणम्, तस्यातिव्याप्तिग्रस्तत्वात् ॥ असम्भवश्च लक्ष्यमात्रावृत्तित्वम् ॥ अत एव गोरेकशफवत्त्वं न लक्षणम्, तस्यासम्भवग्रस्तत्वात् ॥ नित्येति ॥ ध्वंसभिन्नत्वे सति ध्वंसाप्रतियोगित्वं नित्यत्वम् ॥ ध्वंसेऽतिव्याप्तिवारणाय 'ध्वंसभिन्न' इत्यादि ॥ घटादावतिव्याप्तिवारणाय विशेष्यदलम् ॥ ध्वंसप्रतियोगित्वं (१) प्रागभावप्रतियोगित्वं वाऽनित्यत्वम् ॥ यद्भोगायतनं (२) तदेवशरीरम्,

---

१ न्यायमते ध्वंसप्रतियोगित्वं ध्वंसेनास्ति अनित्यत्वं नस्यादतः प्रागभावेति = प्रागभावेऽपि प्रागभाव प्रतियोगित्वं नास्तितत्राप्यनित्यत्वं नस्यादतो ध्वंसप्रागभावान्यतरप्रतियोगित्वमनित्यत्वमितिवाच्यमितिभावः ॥

२ आत्मनोभोगस्थानमित्यर्थःसुखदुःखान्यतरसाक्षात्कारावच्छेदकमिति यावत् = सुखादिसाक्षात्कारावच्छेदकत्वं देशकाले पितत्रापिशरीरत्वव्यवहारप्रसक्तिः स्यादतआहचेष्टाश्रयोवेतिभावः॥

चेष्टाश्रयो वा ॥ इन्द्रियमिति ॥ चक्षुरादावतिव्याप्तिवारणाय 'गन्धग्राहकम्' इति ॥ कालादावतिप्रसक्तिवारणाय 'इन्द्रियम् इति' ॥ विषय इति ॥ शरीरेन्द्रियभिन्नत्वे सत्युपभोगसाधनं विषयः ॥ शरीरादावतिव्याप्तिनिरासाय भिन्नान्तम् ॥ परमाण्वादावतिप्रसक्तिवारणाय विशेष्यदलम् ॥ कालादिवारणाय 'जन्यत्वे सति इत्येतदपि बोध्यम्॥

**शीतस्पर्शवत्य आपः । ता द्विविधाः-नित्या अनित्याश्च । नित्याः परमाणुरूपाः अनित्याः कार्यरूपाः । पुनस्त्रिविधाः-शरीरेन्द्रियविषयभेदात् । शरीरं वरुणलोके । इन्द्रियं रसग्राहकं रसनं जिह्वाग्रवर्ति । विषयः सरित्समुद्रादिः ॥**

(पद०) शीतेति तेजआदावतिव्याप्तिवारणाय 'शीत' इति आकांक्षा (१) वारणाय 'स्पर्श इति ॥ कालादावति (२) प्रसक्तिवारणाय 'समवायसम्बन्धेन' इति पदं देयम् ॥ इन्द्रियमिति ॥ त्वगादावतिव्याप्तिवारणाय 'रसग्राहकम्' इति ॥ रसनेन्द्रिय-

---

ष्टाहिहिताहित परिहारार्था क्रियाविशेषः सचशरीरैकदेशे हस्तादावप्यस्त्यतोऽन्त्यावयवित्वेसतीत्यपि विशेषणं देयम् = अन्त्यावयवित्वञ्च द्रव्यान्तरानारम्भकद्रव्यत्वमित्यर्थः ॥

(१) किंशीतंयद्वत्याआपइत्याकांक्षायां स्पर्शे तीति भावः ॥

(२) आदिपदेनादिक् परिग्रहः ॥ दैशिकविशेषणतयादेशेत्वं पृथिव्यादिविशेषणतयाकालेजन्यपदार्थानांवृत्तित्वनियमादितिभावः ॥

स्मसन्निकर्षादावति(१) व्याप्तिनिरासाय 'इन्द्रियम्' इति॥ सरिदादीति ॥ आदिनातडागहिमकरकादीनां(२) संग्रहः ॥

उष्णस्पर्शवत्तेजः। तद्द्विविधम्—नित्यमनित्यञ्च । नित्यम्परमाणुरूपम् । अनित्यं कार्यरूपम् । पुनस्त्रिविधम्—शरीरेन्द्रियविषभेदात् । शरीरमादित्यलोके। इन्द्रियं रूपग्राहकं चक्षुः कृष्णताराग्रवर्ति । विषयश्चचतुर्विधः—भौमदिव्योदर्याकरजभेदात् । भौमं वह्न्यादिकम् । अविन्धनं(३) दिव्यं विद्युदादि । भुक्तस्य परिणामहेतुरुदर्यम् । आकरजं सुवर्णादि ॥

(पदकृ०) उष्णेति ॥ जलादावतिव्याप्तिवारणाय 'उष्ण' इति ॥ कालादावतिव्याप्तिवाराणाय 'समवायसम्बन्धेन' इति पदं देयम् ॥ इन्द्रियमिति ॥ घ्राणादावतिव्याप्तिवारणाय 'रूपग्राहकम्' इति ॥ काला(४)दावतिव्याप्तिनिरासाय 'इन्द्रियम्' इति ॥ 'भेदात्' इतिपदं प्रत्येकमभिसम्बध्यते(५) ॥ भौममिति ॥ आदिपदेन ख-

१ आदिनादिक्कालयोः परिग्रहः ॥

२ आ[illegible]र्षाविन्दवः ॥

३ अद्भि[illegible]तिप्रकाश्यते इत्यविन्धनम् ।

४ कालादीनां जन्य वस्तुमात्रं प्रतिकारणत्वे रूपादि ग्राहकत्वमप्यस्ति तत्राति व्याप्तिस्यादेवात इन्द्रयमिति ।

५ द्वंद्वान्तेश्रूयमाणंपदंप्रत्येकमभिसम्बध्यते इतितिनियमादितिभावः॥

द्योतगततैजः प्रभृतिपरिग्रहः (१) ॥ विद्युदादीति ॥ आदिना रविचन्द्रादि(२) परिग्रहः ॥ भुक्तेति ॥ भुक्तस्यान्नादेः परिणामो जीर्णता तस्य हेतुरुदर्यम्, इत्यर्थः सुवर्णेति ॥ आदिना रजतादेः(३) परिग्रहः ॥

रूपरहितस्पर्शवान् वायुः । स द्विविधः-नित्योऽनित्यश्च । नित्यः परमाणुरूपः । अनित्यः कार्यरूपः । पुनस्त्रिविधः—शरीरेन्द्रियविषयभेदात् । शरीरं वायुलोके । इन्द्रियं स्पर्शग्राहकं त्वक् सर्वशरीरवृत्ति । विषयो वृक्षादिकम्पनहेतुः शरीरान्तः सञ्चारी वायुः प्राणः । स चैकोऽप्युपाधिभेदात्प्राणापानादिसंज्ञां लभते ॥

(न्यायबो०) एवं पृथिव्यादित्रिकं निरूप्य वायुं निरूपयति(४)—रूपरहितेति ॥ रूपरहितत्वे सति स्पर्शवत्त्वं

---

१ अत्रप्रभृतिपदेनप्रकाशयुक्तओषधीनां परिग्रहः ॥

२ अत्रादिनातारागणम् ॥

३ अत्रादिपदेनशेषंलोहपदवाच्यं सर्वं ग्राह्यम् = तथाहि ॥ सर्वञ्च तैजसंलोहमित्यमरः ॥ सुवर्णं रजतं ताम्रं रीतिः कांस्यं तथात्रपु ॥ सीसंकालायसञ्चैवमष्टौलोहानिचक्षतेइति स्मृतिश्चात ॥ रीतिःपित्तलं = त्रपु रङ्गमित्यर्थः ॥

४ लक्षणस्वरूपप्रामाण्याद्यन्यतम प्रकारिकज्ञानानुकूलोव्यापारोनिरूपयतेरर्थः ॥ वायुनिष्ठायाविषयतातादृशविषयतानिरूपिकाया लक्षणस्वरूपप्रामाण्याद्यन्यतमप्रकारिकाप्रतिपत्तिः तादृशप्र-

वायोर्लक्षणम् ॥ सतिसप्तम्याविशिष्टार्थतया रूपरहितत्व विशिष्टस्पर्शवत्त्वं वायोर्लक्षणम् ॥ विशेषणानुपादाने स्पर्श-वत्त्वमात्रस्य लक्षणत्वे पृथिव्यदित्रिके ऽतिव्याप्तिः तत्रापि स्पर्शवत्वस्यसत्वादतउक्तंरूपरहितेति ॥ विशेष्यानुपादाने आकाशादिपञ्चकेऽतिव्याप्तिः, तत्रापि रूपरहितत्वस्य स-त्त्वात् अतउक्तं 'स्पर्श' इति ॥ अतिव्याप्तिर्नाम अलक्ष्ये लक्षणसत्त्वम् । यथा गोः शृङ्गित्वं लक्षणं कृतं चेत् लक्ष्य-भूतगोभिन्नमहिष्यादावतिव्याप्तिः तत्रापि शृङ्गित्वस्य विद्यमानत्वात् ॥ अव्याप्तिर्नाम लक्ष्यैकदेशावृत्तित्वम् ॥ यथागोर्नीलरूपवत्वं लक्षणं कृतं चेत् ॥ 'लक्ष्यतावच्छेद-काश्रयभूते श्वेतगवि (वे) नीलरूपत्वस्याभावात् ( अव्या-प्तिः ॥) असम्भवो नाम लक्ष्यमात्रे कुत्रापि लक्षणासत्त्वम् ॥ यथा–गोरेकशफत्वम् गोसामान्ये द्विशफत्वेन एकशफत्वा-भात् ॥ अतिव्याप्त्यव्याप्त्यसम्भवानां (प्रत्येकम्) निष्कृष्ट लक्षणं च 'लक्ष्यता (१) वच्छेदकसामानाधिकरण्ये सति लक्षतावच्छेदकावच्छिन्न प्रतियोगिताकभेदसामानाधिकरण्यम्' अतिव्याप्तिः ॥ अव्याप्तिस्तु (२) 'लक्ष्यतावच्छेदकसमा-नाधिकरणात्यन्ताभावप्रतियोगित्वम् ॥ असम्भवस्तु

---

तिपत्यनुकूलोयोव्यापारस्तादृश व्यापारानुकूलायाकृतिस्तादृशकृति-मान् ग्रन्थकारः ॥

१ यथा शृङ्गित्वरूपे लक्षणेलक्षतावच्छेदकगोत्वसमानाधि-करण्यमपिगोत्वावच्छेदकावच्छिन्न प्रतियोगिताकोयोमाहिष्यादौ भे-दस्तत्समानाधि करण्यमपीतिलक्षणसंगतिः ॥

२ एवंनीलरूपवत्वरूपेलक्षणलक्षतावच्छेदकगोत्वसामानाधि-करण श्वेतगोनिष्ठात्यन्ताभाव प्रतियोगित्वसत्वाल्लक्षणसंगतिः ॥

( १ ) 'लक्ष्यतावच्छेदकव्यापकीभूताभावप्रतियोगित्वम्' ( इति ) ॥

( पदकृ० ) रूपेति ॥ घटादिवारणाय विशेषणम् । आकाशादिवारणाय विशेष्यम् ॥ इन्द्रियमिति ॥ चक्षुरादिवारणाय 'स्पर्शग्राहकम्' इति ॥ कालादिवारणाय 'इन्द्रियम्' इति ॥ वृक्षेति । आदिपदेन जलादीनां परिग्रहः ॥ शरीरेति ॥ महावायुवारणाय विशेषणं मनआदि ( २ ) वारणाय विशेष्यम् । धनञ्जय ( ३ ) वारणाय संचारी इति ॥ उपाधीति ॥ 'मुखनासिकाभ्यां निर्गमनप्रवेशनात् प्राणः ॥ जलादेरधोनयनाद् अपानः ॥ भुक्तपरिणामाय जाठरानलस्य समुन्नयनात् समानः अन्नादेरूर्ध्वनयनाद् उदानः नाडीमुखेषु वितननाद् व्यानः इति क्रियारूपोपाधिभेदात्तथा व्यवह्रियते इत्यर्थः ॥

**शब्दगुण(४)कमाकाशम् । तच्चैकं विभुनित्यञ्च**

( न्यायबो० ) आकाशं लक्षयति (५) 'शब्दगुणकम्' इति ॥ अत्र गुणपदं 'अकाशे शब्द एव विशेषगुणः इति द्योत

---

१ एवंहिएकशफत्वरूपेलक्षणे लक्षतावच्छेदकगोत्वसमानाधिकरणात्यन्ताभाव प्रतियोगित्वमितिलक्षण संगतिः ।

२ आदिनानाडीपुंजः ।

३ धनंजयस्य सर्वशरीरव्याप्यत्वेसञ्चरणं नास्तीतिभावः ॥

४ भट्टमतेशब्दस्य द्रव्यत्वेनतन्निरासार्थं गुणपदमुपात्तमिति बोध्यम् ॥

५ असाधारणधर्मानुकूलोव्यापारोलक्षधातोरर्थः ॥

नाय ॥ न त्वतिव्याप्तिवारणाय, समवायेन शब्दवत्त्वमात्रस्य लक्षणत्वात् ॥ तदुक्तम्—

"रूपं गन्धो रसः स्पर्शः स्नेहः सांसिद्धिको द्रवः। बुद्ध्यादि भावनान्ताश्च शब्दो वैशेषिका गुणाः ॥" इति ॥

तच्चैकमिति ॥ अनेकत्वे मानाभावादिति। विभ्विति ॥ सर्वमूर्तसंयोगित्वं विभुत्वम् ॥ मूर्तत्वं च क्रियाश्रयत्वम् ॥ पृथिव्यप्तेजोवायुमनांसि मूर्तानि। पृथिव्यप्तेजोवाय्वाकाशपञ्चकं भूतपदवाच्यम्। भूतत्वं नाम बहिरिन्द्रियग्राह्यविशेषगुणवत्त्वम्(१) ॥

(पदकृ०) शब्देति ॥ शब्दो गुणो यस्य तत्तथा ॥ असम्भववारणाय शब्दपदमुन्नेयम् ॥ विभ्विति ॥ सर्वमूर्त्तद्रव्य(२)संयोगित्वं विभुत्वम् ॥

---

१ विशेषगुणत्वं च भावनान्योयो वायु वृत्ति वृत्ति स्पर्शावृत्ति धर्म समवायी तदन्यत्वे सतिगुरुत्वा जलद्रवत्वान्य गुणत्वम्॥ अत्रजात्यादावति व्याप्तिवारणाय गुणत्वमितिपदम् ॥ गुरुत्व नैमित्तक द्रवत्वयोर्दारणाय गुरुत्वेत्यादि ॥ सां सिद्धिकद्रवत्व संग्राहाया जलेति ॥ संयोगादि वारणाय सत्यन्तं ॥ संस्कारत्व धर्ममादाय भावनायामव्याप्तिवारणायाद्यामन्यान्तं सत्यन्त घटक समवायि विशेषणम् ॥ सत्तादिकमादाया सम्भववारणाय स्पर्श संग्रहायच स्पर्शावृत्तीति ॥

२ द्रव्यपदमत्र स्पष्टार्थमनर्थकं वा ॥ परिच्छिन्न परिमाण वत्वस्य क्रियावत्वस्य वा मूर्तत्वे गुणेषु तद भावादिति भावः।

**अतीतादिव्यवहारहेतुः कालः । स चैको विभुर्नित्यश्च ॥**

(न्यायबो०) कालं लक्षयति—अतीतेति ॥ व्यवहारहेतुत्वस्य लक्षणत्वे 'घटः' इति व्यवहार(१)हेतुभूतघटादावतिव्याप्तिवारणाय 'अतीतादि' इति विशेषणोपादानम् ॥

(पदकृ०) अतीतेति ॥ अतीत आदिर्यो व्यवहारः 'अतीतःभविष्यन्वर्तमान(२) इत्यात्मकः, तस्यासाधारणहेतुः काल इत्यर्थः ॥ 'नन्विदं लक्षणम् आकाशेऽतिव्याप्तं व्यवहारस्य शब्दात्मकत्वात्' इति चेत् न अत्र हेतुपदेन निमित्तहेतोर्विवक्षितत्वात्' नचैवमपि कण्ठताल्वाद्यभिघातेऽतिव्याप्तिरिति वाच्यम् ॥ विभुत्वस्यापि(३) निवेशात्॥

**'प्राच्यादिव्यवहारहेतु'र्दिक् । सा चैका नित्या विभ्वी च ॥**

(न्यायबो०) दिशो लक्षणमाह—प्राचीति ॥ उदयाचलसंयुक्ता दिक् प्राची ॥ अस्ताचलसंयुक्ता दिक् प्रतीची॥ मेरोः सन्निहिता दिग् उदीची—मेरोर्व्यवहिता दिग् दक्षिणा॥

---

१ व्यवहारोद्विविधः अभिधानरूपः स्फुरण रूपश्चेतितत्राभिधानरूप व्यवहाराभिप्रायेण घट इत्युक्तिरिति भावः ॥

२ वर्तमान ध्वंसप्रति योगित्वमतीतत्वम् ॥ वर्तमानप्रागभाव प्रतियोगित्वं भविष्यत्वं वर्तमानोपाधिसम्बन्धित्वं वर्तमानत्वम् ॥

३ तथाच विभुत्वे सत्यतीतादि व्यवहारासाधारण निमित्त कारणत्वं कालत्वमिति फलितोऽर्थः ॥

(पदकृ०) प्राच्येति ॥ 'इयं प्राची' इयमवाची इयं प्रतीची' 'इयमुदीची' इत्यादि (१) व्यवहारासाधारणं (कारणं) दिगित्यर्थः ॥ 'हेतुर्दिक्' इत्युच्यमाने परमाण्वादावतिव्याप्तिः स्यात् 'तद्वारणाय, प्राच्यादि व्यवहारहेतुः' इति ॥ आकाशादि (२) वारणाय असाधारण, इत्यपि बोध्यम् ॥

**ज्ञानाधिकरणमात्मा (३) । स द्विविधः—परमात्मा (४) जीवात्मा चेति तत्रेश्वरःसर्वज्ञः परमात्मा एक एव । जीवः (५) प्रतिशरीरं भिन्नो (६) विभुर्नित्यश्च ॥**

(न्यायबो०) आत्मानं निरूपयति—ज्ञानाधिकरणमिति ॥ अत्राधिकरणपदं समवायेन ज्ञान(७)लाभार्थम् ॥

---

१ आदि पदेन दशादिक्षु व्यवहारो बोध्यः ॥

२ अत्रादि पदेन पूर्वोक्त यावत् साधारणकारणानामुपस्थितिः॥

३ मुक्तावस्थायां ज्ञानोत्पादकात्ममनः संयोगाभावेन ज्ञानाधिकरणत्वाभावात् मूलोक्तं लक्षणमव्याप्तमतोज्ञान सामानाधिकरण द्रव्य विभाजकोपाधिमत्वमिति बोध्यम् ॥

४ परमत्वंच जगज्जननादि कर्तृत्त्वम् ॥

५ जीवत्वं च समवायेन जन्य ज्ञानाधिकरणत्वम् ॥

६ सुखादि भोग वैचित्र्यात् प्रति शरीरं जीव भेदो ऽनुमीयते इतिभावः ॥

७ अन्यथा कालिक सम्बन्धेन कालेपि ज्ञानस्य सत्वेनातिव्याप्तिः स्यादिति भावः ॥

( पदकृ० ) ज्ञानाधिकरणेति ॥ भूतलादिवारणाय 'ज्ञान' इति ॥ कालादिवारणाय 'समवायेन' इत्यपि देयम् ॥ ईश्वर इति ॥ समवायसम्बन्धेन नित्यज्ञानवान् ईश्वरः ॥ जीवेति ॥ सुखादिसमवायिकारणं जीवः ॥

**सुखाद्युपलब्धिसाधनमिन्द्रियं मनः। तच्च प्रत्यात्मनियतत्वादनन्तं परमाणु[1] रूपं नित्यं च॥**

(न्यायबो०) मनो निरूपयति—सुखादीति ॥ उपलब्धिर्नाम साक्षात्कारः ॥ तथाच 'सुखादिसाक्षात्कारणत्वे सतीन्द्रियत्वं मनसो लक्षणम् ॥ इन्द्रियत्वमात्रोक्तौ चक्षुरादावतिव्याप्तिः, अतः पूर्वदलम् ॥ विशेष्यानुपादाने आत्मन्यतिव्याप्तिः, आत्मनो ज्ञानादिकंप्रति समवायिकारणत्वात् अत इन्द्रियत्वरूपविशेष्योपादानम् ॥

(पदकृ०) सुखेति ॥ आत्ममनःसंयोगादि(२)वारणाय 'इन्द्रियम्' इति ॥ चक्षुरादिवारणाय 'सुख' इति ॥

---

१ मध्यम परिमाणत्वे ऽनित्यत्वापत्तिः विभुत्वे च विभुद्वय संयोगा स्वीकारेणात्म मनः संयोग रूपा समवायि कारणस्याभावाद् ज्ञानानुपपत्तिरत आह परमाणु रूपमिति ॥

२ आदि पदेन कालादि साधारण कारणानां संग्रहः कार्य्यमात्रे साधारण कारणानि च ॥ ईशस्तज्ज्ञान यत्नेच्छाः कालो ऽदृष्टंदिगेव च ॥ प्राक् प्रति बन्धकाभावौ कार्य्ये साधारणाः स्मृताः इति कारिकोक्तनवसंख्याकानिवेदितव्यानीति ॥

चक्षुर्मात्रग्राह्यो गुणो रूपम्। तच्च शुक्ल-नीलपीतहरितरक्तकपिशचित्रभेदात्सप्तविधम्॥ पृथ्व्यप्तेजोवृत्ति। तत्र पृथ्व्यां सप्तविधम्। अभास्वरशुक्लं जले भास्वरशुक्लं तेजसि॥

(न्यायबो०) रूपं लक्षयति चक्षुर्मात्रेति चक्षुर्मात्रग्राह्य-त्वविशिष्टगुणत्ववत्वं रूपस्य लक्षणम्॥ विशेष्यमात्रोपा-दाने रसादावतिव्याप्तिः, अतः 'चक्षुर्मात्रग्राह्य' इति विशे-षणम्॥ तावन्मात्रोपादाने रूपत्वेऽतिव्याप्तिः 'यो गुणो यदिन्द्रियेण गृह्यते—तन्निष्ठा जातिरपि(१) तदिन्द्रियेण गृ-ह्यते' इति नियमात् अतस्तद्वारणाय विशेष्योपादानम्॥ चक्षुर्मात्रग्राह्यत्वं नाम चक्षुर्भिन्नेन्द्रियाग्राह्यत्वे सति चक्षुर्ग्रा-ह्यत्वम्॥ मात्रपदानुपादाने संख्यादिसामान्यगुणेऽतिव्या-प्तिः, संख्यादावपि चक्षुर्ग्राह्य( त्व ) विशिष्टगुण(त्व)स्य स-त्त्वात् अतस्तत्रातिव्याप्तिवारणाय मात्रपदम्॥ संख्या-देश्चक्षुर्भिन्नत्वग्ग्राह्यत्वाच्चक्षुर्मात्रग्राह्यत्वं नास्ति॥ अतीन्द्रय गुरुत्वादावति व्याप्ति वारणाय चक्षुर्ग्राह्येति॥ अत्र लक्षणे ग्राह्यत्वं नाम लौकिकप्रत्यक्षविषयत्वम्॥ अग्राह्यत्वं नाम तदविषयत्वम्॥ तथा च त्वगिन्द्रियजन्यसाक्षात्काराऽवि-षयत्वे सति चक्षुर्जन्यलौकिक(२)प्रत्यक्षविषयत्वेसति गुणत्वं

---

१ अपिना ऽभाव संग्रहः॥

२ ज्ञातं रूपमिति प्रत्यक्ष उपनीत भान विषये ज्ञाने ऽति व्याप्ति वारणाय लौकिकेति तथा च तादृश ज्ञान प्रत्यक्षस्य चक्षुः संयुक्त मनः संयुक्तात्म समवाय रूप सन्निकर्ष जन्यस्य षड्विध सन्निकर्षाजन्यत्वान्नदोषः॥

इति फलितोऽर्थः ॥ ननु 'प्रभाघटसंयोगे रूपलक्षणस्याति-व्याप्तिः तस्य चक्षुर्मात्रग्राह्यत्वात्' इति चेत् ॥ न गुणपदस्य विशेषगुणमात्रपरत्वात् नचैवं विशेषगुणघटितलक्षणे संख्या-दावतिव्याप्त्यभावान्मात्रपदवैयर्थ्यम्' इति वाच्यम् ॥ जल-मात्रवृत्तिसांसिद्धिकद्रवत्वादावतिव्याप्तिवारणाय तदुपा-दानात् ॥ अथवा(१) चक्षुर्मात्रग्राह्यजातिमद्गुण(त्व)स्य लक्षणत्वान्न प्रभाघटसंयोगादावतिव्याप्तिः, संयोगत्वजा-तेश्चक्षुर्मात्रग्राह्यत्वाभावात् ॥ घटसंयोगस्य त्वगिन्द्रियग्रा-ह्यत्ववत्तद्वृत्तजातेरपि त्वगिन्द्रियग्राह्यत्वात् ॥ अत्र जाति-घटितलक्षणे गुणत्वानुपादाने चक्षुर्मात्रग्राह्यजातिमति सुव-र्णादावतिव्याप्तिः तद्वारणाय तदुपादानम् ॥ एवं रसादि-लक्षणे विशेषणानुपादाने लक्ष्यभिन्नगुणेऽतिव्याप्तिः वि-शेष्यानुपादाने लक्ष्यमात्रवृत्तिरसत्वगन्धत्वादावतिव्याप्तिः अतो विशेषणविशेष्ययोरुपादानम् ॥

(पदकृ०) चक्षुर्मात्रेति ॥ रूपत्वादिवारणाय गुणपद-म् ॥ रसादिवारणाय 'चक्षुर्ग्राह्य' इति । संख्यादिवारणा-य मात्र पदम् ॥ यद्यपि प्रभाभित्तिसंयोगवारणाय गुण-पदेन विशेषगुणत्वस्य विवक्षणीयतया तत एव संख्यादि-वारणे सम्भवति मात्रपदं व्यर्थम्, तथापि सांसिद्धिकद्रव-त्ववारणाय तदावश्यकम् ॥ वस्तुतस्तु परमाणुरूपेऽव्या-प्तिवारणाय चक्षुर्मात्रग्राह्यजातिमत्त्वस्य विवक्षणीयतया विशेषपदं न देयम् । त्र्यणुकादि(२)वारणाय गुणपदं तु देयम् ॥ सप्तेति ॥ 'रूपम्' इत्यनुषज्यते ॥

---

१ एवमपि परमाणु रूपे ऽव्याप्तिरत आह अथवेति ।
२ आदिनास्वर्णादिः ॥

रसनाग्राह्यो गुणो रसः। स च मधुराम्ललवणकटुकषायतिक्तभेदात्षड्विधः। पृथिवीजलवृत्तिः। तत्र पृथिव्यां षड्विधः। जले मधुर एव ॥

(पदकृ०) रसनेति ॥ रसत्वादिवारणाय 'गुणः' इति ॥ रूपादिवारणाय 'रसन' इति ॥ तत्रेति ॥ पृथिवीजलयोः इत्यर्थः ॥ षड्विधइति ॥ अत्र 'रस' इत्यनुवर्तते ॥

घ्राणग्राह्यो गुणो गन्धः। स द्विविधः—सुरभिर(१)सुरभिश्च पृथिवीमात्रवृत्तिः ॥

(पदकृ०) घ्राणेति ॥ गन्धत्वादावतिव्याप्तिवारणाय 'गुणः' इति ॥ रूपादावतिव्याप्तिवारणाय 'घ्राणग्राह्यः' इति ॥ पृथिवीति ॥ पृथिवीसम्बन्धसत्वे गन्धप्रतीतिसत्त्वं पृथिवीसम्बन्धाभावे गन्धप्रतीत्यभावः' इत्यन्वयव्यतिरेकाभ्यां पृथिवीगन्धस्यैव प्रतीतिर्जले बोध्या ननु 'देशान्तरस्थकस्तूरीकुसुमसम्बन्धिपवनस्यैतद्देशे सत्वेपि पृथिवीसम्बन्धाभावाद्गन्धप्रतीत्यनुपपत्तिः॥ नच वाय्वानीतत्र्यणुकादिसम्बन्धोऽस्त्येव' इति वाच्यम् ॥ कस्तूर्यां न्यूनतापत्तेः कुसुमस्य सच्छिद्रत्वापत्तेः'। इति चेत् ॥ न ॥ भोक्तृदृष्टविशेषेण पूर्ववत्त्र्यणुकान्तराद्युत्पत्तिः ॥ कर्पूरादौ तु तदभावा(२)न्न तथा ॥

---

१ गन्धे सुरभित्वं च षट्पदाद्यभिलाष विषयत्वम् ॥

२ दृष्टानुसारित्वाद दृष्टकल्पनाया इति भावः ॥

**त्वगिन्द्रियमात्रग्राह्यो गुणः स्पर्शः । स त्रिविधः—शीतोष्णानुष्णाशीतभेदात् । पृथिव्यप्तेजोवायुवृत्तिः । तत्र शीतो जले । उष्णस्तेजसि । अनुष्णाशीतः पृथिवीवाय्वोः ॥**

(न्यायबो०) स्पर्शं लक्षयति—त्वगिन्द्रियेति ॥ अत्रापि मात्रपदं संख्यादिसामान्यगुणादावतिव्याप्तिवारणाय ॥ अन्यविशेषणकृत्यं पूर्ववद्बोध्यम् । ग्राह्यत्वपदार्थोऽपि पूर्ववद् एव बोध्यः ॥

(पदकृ०) त्वगिति ॥ स्पर्शत्वादावतिव्याप्तिवारणाय 'गुणः' इति ॥ रूपादावतिव्याप्तिवाराणाय 'त्वगिन्द्रय—' इति॥संख्यादिवारणाय मात्रपदम् ॥ तत्रेति॥ पृथिव्यादिचतुष्टये ॥ शीत इति ॥ शीतस्पर्शः ॥ उष्ण इति ॥ उष्णस्पर्शः॥

**रूपादिचतुष्टयं पृथिव्यां पाकजमनित्यंच ॥**

---

वस्तुतस्तु उद्बुद्धानुद्बुद्ध भेदेन गन्धो द्विविधः तत्र कुसमादौ-भूतलावयव उभय गन्धवन्तः अतएव यन्त्र द्वारा सार निसृतनिःशेष कुसुमे गन्धाभावो ऽप्युपलभ्यते तथा च रजतापहारि सलिल संयोगेन रजतपणोपरिभागस्थ सूक्ष्मावयवापहरणवत् वेगशालिन्य-वायुनापि कुसुमोपरिभागस्थ सूक्ष्मावयवा अपकृष्यन्ते इति न सच्छिद्रत्वादि दोषापत्तिर्नाप्यदृष्टादि क्लिष्टकल्पना इति भावः ॥

१ लौकिक प्रत्यक्ष विषय वृत्तिरेवचक्षुरग्राह्यत्वागिन्द्रियग्राह्य गुणविभाजकोपाधिमत्वमितिफलितो ऽर्थः ॥

अन्यत्रा (१) पाकजं नित्यमनित्यं च । नित्य-गतं (२) नित्यम् । अनित्य (३) गतमनित्यम् ॥

(न्यायबो०) रूपादीति ॥ एतत्तत्त्वनिर्णयश्चेत्थम् पाको नाम विजातीयतेजःसंयोगः ॥ स च नानाजातीयः रूपजनको विजातीयतेजःसंयोगः ॥ तदपेक्षया रसजनको विजातीयः ॥ एवं गन्धजनकोऽपि विजातीयः ॥ एवं स्पर्शजनकोऽपि तथा ॥ एवंप्रकारेण भिन्नभिन्नजातीयाः पाकाः कार्यवैलक्षण्येन कल्पनीयाः ॥ तथाहि ॥ तृणपुञ्जनिक्षिप्त आम्रादावूष्मलक्षणविजातीयतेजःसंयोगात्पूर्वहरितरूपनाशेरूपान्तरस्य पीतादेरुत्पत्तिः न तु रसादेरुत्पत्तिः ॥ पूर्वरसस्यैवाम्लस्यानुभवात् ॥ क्वचित्पूर्वहरितरूपस्य सत्वेऽपि रसपरावृत्तिर्दृश्यते, विजातीयतेजःसंयोगव्यपाकवशात्पूर्वतनाम्लरसनाशेन मधुररसस्यानुभवात् ॥ तस्माद्रूपजनकापेक्षया रसजनको विलक्षण एवाङ्गीकार्यः ॥ एवं गन्धजनकोऽपि विलक्षण एव, रूपरसयोरपरावृतावपि पूर्वगन्धनाशे विजातीयपाकवशात्सुरभिगन्धोपलब्धेः ॥ एवं स्पर्शजनकोऽपि पाकवशात्कठिनस्पर्शनाशे मृदुस्पर्शानुभवात् ॥ तस्माद्रसादिजनकाविजातीयाएवपाकाः ॥ अतएव पार्थिवपरमाणूनामेकजातीयत्वेऽपि पाकमहिम्नाविजातीयद्रव्यान्तरानुभवः ॥ यथा गोभुक्ततृणादीनामापरमाण्वन्तभङ्गे तृणारम्भकपरमाणुषु विजातीयतेजः

---

१ सलिलादि त्रिके रूप रस स्पर्श त्रिकमग्नि संयोगानुत्पन्नमित्यर्थः ॥

२ परमाणुगतम् ॥ कार्य्यगतम् ॥

संयोगात् पूर्वरूपादिचतुष्टयनाशे तदनन्तरं दुग्धेयादृशं रूपादिकंवर्तते ताटशरूपरसगन्धस्पर्शजनकास्तेजःसंयोगा जायन्ते, तदुत्तरं तैरेव तादशरूपरसादय उत्पद्यन्ते ॥ एतादृशरूपरसादिविशिष्टपरमाणुभिर्दुग्धद्वयणुकमारभ्यते, ततस्त्र्यणुकादिक्रमेणदुग्धारम्भः इति ॥ एवं दुग्धारम्भकैः परमाणुभिरेव दध्यारभ्यते पाकमहिम्ना ॥ एवं दध्यारम्भकैरेव परमाणुभिर्नवनीतारम्भः इति दिक् ॥

**एकत्वादिव्यवहारहेतुः संख्या । नवद्रव्यवृत्तिः । एकत्वादिपरार्धपर्यन्ता । एकत्वं नित्यमनित्यं च । नित्यगतं(१) नित्यम् । अनित्य(२)गतमनित्यम् । द्वित्वादिकं तु सर्वत्रानित्य(३)मेव ॥**

---

(१) भूतलादि चतुर्णां परमाणवः अकाशादि पञ्च च नित्यास्तेषु गतमेकत्वमपिनित्यमिति भावः ॥

२ अनित्यत्वं च यावत् घटपटादि कार्यं जातस्य ॥

३ अपेक्षा बुद्धि जन्यत्वादिति भावः ॥ समवायेन द्वित्वत्वावच्छिन्न प्रतिविशेष्यता सम्बन्धेनापेक्षाबुद्धेर्निमित्त कारणत्वम् असमवायिकारणं च समवायिकारणगतमेकत्वम् ॥ अपेक्षाबुद्धित्वञ्चानेकैकत्वावगाहित्वम् ॥ तन्नाशादेवद्वित्वादीनां नाशः न च समवायि कारणनाशाद समवायिकारण नाशाद्वाकार्य्य नाश इति नियम विरोधः नतु समवायिकारणासमवायिकारणान्यतर नाशा देवकार्य्य नाश इति नियमः किन्तु समवायि कारणासमयिकारणान्यतर नाशे कार्य्य नाशो भवत्येवेति नियमः तथाच

(पदकृ०) एकादीति । 'एकत्वम् इत्यादिर्यो व्यवहारः एकः द्वौ' इत्याद्यात्मकः । तस्य हेतुः संख्या, इत्यर्थः ॥ पदादिवारणाय 'एकादि' इति ॥ तथा च—

'एकं दश शतं चैव सहस्रमयुतं तथा ।
लक्षं च नियुतं चैव कोटिरर्बुदमेव च ॥
वृन्दं खर्वो निखर्वश्च शङ्खः पद्मश्च सागरः।
अन्त्यं मध्यं परार्धं च दशवृद्ध्या यथाक्रमम् ॥

इति महदुक्तेः परार्धपर्यन्तैव संख्या, इति भावः ॥

मानव्यवहारासाधारणकारणं परिमाणम् । नवद्रव्यवृत्ति। तच्चतुर्विधम्—अणु महद्दीर्घं ह्रस्वं चेति ॥

(पदकृ०) मानेति ॥ 'मानं परिमितिः' तस्य यो व्यवहारः 'इदमणु' इदं महत्' इत्याद्यात्मकः, तस्य कारणं परिमाणम्' इत्यर्थः ॥ दण्डादिवारणाय 'मान' इति ॥ कालादिवारणाय 'असाधारणं' इति ॥ शब्दत्ववारणाय 'कारणम्(१)' इति ॥ नवद्रव्येति ॥ चतुर्विधमपि परममध्यमभेदेन द्विविधम् ॥ तत्र परमाणुत्वह्रस्वत्वे च परमाणुमनसोः ॥ मध्यमाणुत्वह्रस्वत्वे द्व्यणुके ॥ परममहत्त्वदीर्घत्वे ग-

---

कुत्रचित् द्वित्वादि स्थले ऽपेक्षाबुद्धि रूप निमित्त कारणं नाशादपि द्वित्वादि रूप कार्य्य नाशेन नियम विरोध इति भावः ॥

१ मानव्यवहारेति शब्दे शब्दत्वस्याप्य साधारण धर्मत्वात्कारणेति पदमित्यर्थः ॥

गनादौ ॥ मध्यममहत्त्वदीर्घत्वे घटादौ ॥ 'एतन्मौक्तिका-देतन्मौक्तिकमणु' इति व्यवहारस्य निकृष्टमहत्त्वाद्गौणत्वं बोध्यम् ॥ एवमेव 'केतनाद्व्यजनं ह्रस्वम्' इत्यत्रापि निकृष्टदीर्घत्वाद्गौणत्वम् ॥

**पृथग्व्यवहारासाधारणकारणं पृथक्त्वम् । सर्वद्रव्यवृत्ति ॥**

(पदकृ०) पृथगिति ॥ 'अयमस्मात्पृथक्' इति यो व्यवहारः तस्य कारणं पृथक्त्वम्, इत्यर्थः । दण्डादिवारणाय 'पृथक्—' इत्यादि ॥ कालादिवारणाय 'असाधारणं—' इति ॥ पृथग्व्यवहारत्ववारणाय 'कारणम्' इति ॥

**संयुक्तव्यवहारहेतुः संयोगः । नवद्रव्यवृत्तिः ।**

(पदकृ०) संयुक्तेति ॥ 'इमौ संयुक्तौ' इति यो व्यवहारस्तस्य हेतुः संयोगः, इत्यर्थः ॥ दण्डादिवारणाय 'संयुक्तव्यवहार' इति ॥ कालादिवारणाय 'असाधारण' इत्यपि देयम् । संयुक्तव्यवहारत्वे ऽतिव्याप्तिवारणाय 'हेतुः(१)' इति ॥ उपदर्शितलक्षणचतुष्टये 'असाधारण' पदं देयम् ॥ क्वचित्पुस्तके परिमाणपृथक्त्वलक्षणे 'असाधारण' पदं दृश्यते, 'तत्त्वाधुनिकैर्न्यस्तम्' इति बोध्यम् ॥

**संयोगनाशको गुणो विभागः । नवद्रव्यवृत्तिः ।**

(न्याय०) विभागं लक्षयति—संयोगेति ॥ संयोगनाशकत्वविशिष्टगुणत्वं विभागस्य लक्षणम् ॥ विशेषणमात्रापादाने

---

१ संयुक्त व्यवहारो ऽसाधारण धर्मत्वं संयुक्त व्यवहारत्वस्यातस्तद्वारणाय हेतुरिति पदमिति ॥

क्रियाया अपि संयोगनाशकत्वात्तत्रातिव्याप्तिवारणाय गुण (१) त्वविशेषणम् ॥

(पदकृ०) संयोगेति ॥ संयोगनाशजनक इत्यर्थः ॥ कालेऽतिप्रसक्तिनिवारणाय गुणपदम् ॥ ईश्वरेच्छादिवारणाय 'असाधारण' इत्यपि बोध्यम् ॥ ननु 'असाधारण' पदोपादाने गुणपदस्य वैयर्थ्यं स्यात् इति चेत् ॥ न ॥ क्रियायामतिप्रसक्तिवारणाय तस्याप्यावश्यकत्वात् ॥

**परापरव्यवहारासाधारणकारणे परापरत्वे। ते द्विविधे दिक्कृते कालकृते च दूरस्थे दिक्कृतं परत्वम्। समीपस्थे दिक्कृतमपरत्वम्। जेष्ठे कालकृतं परत्वम् कनिष्ठे कालकृतमपरत्वम् ॥**

(पदकृ०) परेति॥ 'परव्यवहारासाधारणं कारणं परत्वम् ॥ अपरव्यवहारासाधारणकारणम् अपरत्वम्' इत्यर्थः ॥ दण्डादि (२) वारणाय 'परव्यवहार' इति ॥ कालादिवारणाय 'असाधारण' इति। परव्यवहारत्ववारणाय 'कारण (३)' इति ॥ एवमेव द्वितीये बोध्यम् ॥

---

१ क्रमश्चात्रेत्थं पूर्वं द्रव्ये क्रियाक्रियातो विभागस्ततः पूर्व संयोग नाशोभवति ॥ तथा च संयोग नाशकत्वं क्रिया विभागयोरुभयोरपि सुवचं गुण पद प्रयोगे च क्रियायागुणत्वाभावान्न दूषणन् साक्षात्पदोपादानेच गुणपदमनुपादेयमेवेति न दोषः ॥

२ दण्ड इत्यभिवादन रूपासाधारण कारणत्वं दण्डेप्यस्तीति भावः॥

३ परव्यवहारे असाधारण धर्मत्वं परव्यवहारत्वस्याप्यतोऽसाधारणकारणेति ॥

आद्य (१) पतनासमवायिकारणं गुरुत्वम् । पृथिवीजलवृत्ति ।

(न्यायबो०) गुरुत्वं लक्षयति—आद्येति ॥ द्वितीयपतनक्रियायां वेगस्यैवासमवायिकारणत्वात्तत्रातिव्याप्तिवारणाय 'आद्य इति ॥ उत्तरलक्षणेऽप्याद्यविशेषणं पूर्ववद्योजनीयम् ॥

(पदकृ०) आद्येति ॥ दण्डादि (२) वारणाय 'असमवायि' इति ॥ रूपादिवारणाय 'पतन (३) इति ॥ वेगेऽतिव्याप्तिवारणाय 'आद्य' इति ॥

(आद्य) स्यन्दना (४) समवायिकारणं द्रवत्वम् ! पृथिव्यप्तेजोवृत्ति । तद्द्विविधम् । सांसिद्धिकं नैमित्तिकंच । तत्र सांसिद्धि(५)कं जले । नै-

---

१ आद्यत्वञ्चेह स्वसमानाधिकरण पतन प्रतियोगिकध्वंसासमान कालिकत्वम् द्वितीयादि पतन प्राथमिक पतने ध्वंस समान कालिकत्वात्तद्व्युदास इति भावः ॥

२ आम्रादि पतन रूपायां क्रियायां बहुधा दण्ड लोष्ट्रादीनां निमित कारणत्वमतो ऽसमवायि इति ॥

३ घटादि रूपाद्यसमवायिकारणत्वं कपालादि गत रूपादीनाभतः पतनेति पदम् ॥

४ स्यन्दन स्रवण रूपाक्रियाविशेषस्तद समवायिकारणमित्यर्थः ॥

५ सांसिद्धिकत्वं नाम निमित्तानपेक्षाधोदेशप्रसरत्वम् ॥

मित्तिकं पृथिवीतेजसोः। पृथिव्यां घृता (१) दावग्निसंयोगजं द्रवत्वम्। तेजसि सुवर्णादौ(२)

(पदकृ०) स्यन्दनेति ॥ दण्डादि (३) वारणाय 'असमवायि' इति रसादिवार (४)णाय 'स्यन्दन' इति ॥

चूर्णादिपिण्डीभावहेतुर्गुणः स्नेहः। जलमात्रवृत्तिः ॥

(न्यायबो०) स्नेहं लक्षयति—चूर्णादीति ॥ चूर्णादिपिण्डीभावहेतुत्वे सति गुणत्वं स्नेहस्य लक्षणम् ॥ पिण्डीभावो नाम चूर्णादिधारणाकर्षणहेतुभूतो विलक्षणसंयोगः ॥ तादृशसंयोगे स्नेहस्यैवासाधारणकारणत्वम् ॥ न तु जलादिगतद्रवत्वस्य, तथा सति द्रुतसुवर्णादिसंयोगेन चूर्णादिपिण्डीभावापत्तेः ॥ अतः स्नेह एवासाधारण (५) कारणम् ॥ विशेषणमात्रोपादाने कालादावतिव्याप्तिः, तद्वारणाय विशेष्योपादानम् ॥ वस्तु (६) तस्तु द्रुतजलसंयोग-

---

१ अत्रादि पदेन लाक्षाग्राह्या ॥

२ आदि पदेन पूर्वोक्तानिलोह पद वाच्यानि ॥

३ स्यन्दनं प्रस्रवणं तत्र निमित कारणताकुत्राचित् प्रतिरुद्ध सालिल स्थले दण्डस्यापि भवत्यतो ऽसमवायि इति पदमिति भावः ॥

४ अवयवि गत रसत्वाद्यवच्छिन्नं प्रत्यवयव गत रसत्वाद्यवच्छिन्नस्य कारणत्वादिति भावः ॥

५ असाधारण निमित्त कारणमित्यर्थः ॥

६ वस्तुतास्त्वति ग्रन्थेन स्नेहस्य मूलोक्तं लक्षणं व्याहतमतो ऽनायत्यास्नेहत्व जातिमत्वमेव लक्षणं वाच्यमितिभावः ॥

स्यैव पिण्डीभावहेतुत्वम्, स्नेहस्य पिण्डीभावहेतुत्वे मानाभावात् ॥ जले द्रुतत्वविशेषणात्करकादिव्यावृत्तिः ॥

(पदकृ०) चूर्णादीति ॥ 'चूर्णं पिष्टं तदेवादिर्यस्य मृत्तिकादेः स चूर्णादिः तस्य पिण्डीभावः संयोगविशेषः तस्य हेतुर्निमित्तकारणं स्नेहः' इत्यर्थः । कालादावतिव्याप्तिवारणाय गुणपदम् ॥ रूपादावतिव्याप्तिवारणाय 'पिण्डीभाव' इति चूर्णपदं स्पष्टा(१)र्थम् ॥

**√श्रोत्रग्राह्यो गुणः 'शब्दः'। आकाशमात्रवृत्तिः । स द्विविधः ध्वन्यात्मको वर्णात्मकश्च । तत्र ध्वन्यात्मको भेर्यादौ(२)वर्णात्मकः संस्कृतभाषारूपः ।**

(न्यायबो०) शब्दं लक्षयति—श्रोत्रग्राह्य इति ॥ शब्दत्वेऽतिव्याप्तिवारणाय 'गुणः'इति॥ स(३)त्रिविधः-संयोगजो

---

१ लोहादि पिण्डी भावे हेतु भूताग्नि संयोग व्यभिचारवारणाय चूर्ण पदं न तु स्पष्टार्थमिति चिन्त्यम् ॥

२ अत्रादि पदेन वेणुवीणादीनां संग्रहः ॥

३ स द्विविधोपि शब्दः संयोगज विभागज शब्दज भेदेन त्रिविधोभवति तत्र ध्वन्यात्मकस्य त्रिविधत्वंतु टीकाकारेणदर्शितम् वर्णात्मकस्य त्रिविधत्वञ्चेत्थं वायु कंठ संयोगेन ओष्ठ द्वयविभागेन वीची तरङ्ग न्यायेन च त्रिविधत्वम् ॥ तत्र शब्दमात्रे समवायिकारणमाकाशम् ॥ असमवायिकारणञ्च यथाक्रमेण कण्ठाकाश संयोगः ॥ ओष्ठाकाश विभागादिरिति ॥

विभागजः शब्दजश्चेति भेरीदण्डसंयोगजन्यो भांकारादिशब्दः, हस्तघातसंयोगादिजन्यो मृदङ्गादिशब्दः ॥ वंशे पाटयमाने दलद्वयविभागजन्यः पटपटादिशब्दः ॥ शब्दोत्पत्तिदेशमारभ्य कर्णविवरपर्यन्तं वीचीतरङ्गन्यायेन कदम्बमुकुलन्यायेन वा निमित्तपवनसम्बन्धाच्छब्दधारा जायते तत्रोत्तरोत्तरशब्देपूर्वपूर्वशब्दः कारणम् ॥

(पदकृ०) श्रोत्रेति ॥ शब्दत्वेऽतिव्याप्तिवारणाय 'गुणः' इति ॥ रूपादिवारणाय 'श्रोत्रग्राह्यः' इति ॥ वस्तुतस्तु श्रोत्रोत्पन्नशब्दस्यैवश्रोत्रग्राह्यत्वेन तद्भिन्ने ऽव्याप्तिवारणाय श्रोत्रग्राह्यजातिमत्त्वे तात्पर्याद्गुणपदमनुपादेयमेव ॥

## सर्वव्यवहार(१)हेतुर्गुणो बुद्धिर्ज्ञानम्(२)। सा द्विविधा—स्मृतिरनुभवश्च ॥

(न्यायबो०) बुद्धेर्लक्षणमाह—सर्वव्यवहारेति ॥ व्यवहारः शब्दप्रयोगः, ज्ञानं विना शब्दप्रयोगासभवाच्छब्दप्रयोगरूपव्यवहारहेतुत्वं ज्ञानस्य लक्षणम् ॥ बुद्धिं विभजते—स्मृतिरनुभवश्चेति ॥

(पदकृ०) बुद्धिलक्षणमाह—सर्वेति ॥ सर्वे ये व्यवहार आहारविहारादयः तेषां हेतुर्बुद्धिः, इत्यर्थः ॥ दण्डादिबा-

१ व्यवहारत्वावच्छिन्न कार्य्यतानिरूपितासाधारणकारणत्वं बुद्धित्वमिति निष्कर्षः ॥

२ लाघवेन लक्षणान्तरमाह ज्ञानमिति ॥ ज्ञानत्वजातिमत्वं बुद्धित्वमित्यर्थः ॥ लाघवञ्च शरीर कृतमुपस्थिति कृतं सम्बन्ध कृतमिति त्रिविधमिति बोध्यम् प्रकृतेचाद्यमेवेति ॥

रणाय 'सर्वव्यवहार' इति कालादिवारणाय 'असाधारण' इत्यपि देयम् ॥

## संस्कारजन्यं ज्ञानं स्मृतिः(१)

(न्यायबो०) स्मृतिं लक्षयति-(संस्कारेति)॥ संस्कारजन्यत्वविशिष्टज्ञानत्वं स्मृतेर्लक्षणम् ॥ विशेषणानुपादाने प्रत्यक्षानुभवेऽतिव्याप्तिः'तद्वारणाय विशेषणोपादानम् ॥ संस्कारध्वंसेऽतिव्याप्तिवारणाय विशेष्योपादानम् ॥ ध्वंसे प्रतियोगिनः कारणत्वात् संस्कारध्वंसेऽपि संस्कारजन्यत्वस्य सत्त्वात् ॥

(पदकृ०) संस्कारेति ॥ संस्कारध्वंसे ऽतिव्याप्तिवारणाय 'ज्ञानम्' इति । अनुभवेऽतिव्याप्तिवारणाय संस्कारजन्यम्' इति । तथापि प्रत्यभिज्ञायामतिव्याप्तिवारणाय संस्कारमात्रजन्यत्वं विवक्षणीयम् ॥ क्वचित्तथैव पाठः नचैवं सत्यसम्भवः(२) ॥ तस्य(३) संस्कारजन्यत्वे सतीन्द्रियार्थसन्निकर्षाजन्यार्थत्वात् ॥

## तद्भिन्नं ज्ञानमनुभवः। स द्विविधः-यथार्थोऽयथार्थश्च ॥

(न्यायबो०) अनुभवं लक्षयति-(तद्भिन्नमिति)॥ तद्भिन्नत्वं नाम स्मृतिभिन्नज्ञानत्वम् ॥ तत्र विशेषणानुपादाने स्मृ-

---

१ स्मृतित्वञ्च स्मरामीत्यनुभव सिद्धोजातिविशेष इति ॥

२ कार्य्यमात्रस्यादृष्टादि साधारण कारण जन्यत्वेन संस्कारमात्र जन्यत्वं कस्यापि पदार्थस्य नास्तीति भावः ॥

३ मात्रपदस्य ॥

त्राव्याप्तिः, विशेष्यानुपादाने घटादावतिव्याप्तिः अतस्त द्वारणाय तयोरुपादानम्॥ अनुभवं विभजते—स द्विविध इति॥

(पदकृ०) तदिति॥स्मृतित्वावच्छिन्नभिन्नमित्यर्थः॥ तेन यत्किंचित्स्मृतिभिन्नत्वस्य स्मृतौ सत्त्वेपि न क्षतिः। घटादावतिव्याप्तिवारणय'ज्ञानम्'इति॥स्मृतिवारणाय 'तद्भिन्नम्'इति

तद्वति(१) तत्प्रकारकोऽनुभवो यथार्थः-सैव(२) प्रमेत्युच्यते॥

(न्यायबो०) यथार्थानुभवं लक्षयति—तद्वतीति॥ 'तद्वति' इत्यत्र सप्तम्यर्थो विशेष्यत्वम्, तच्छब्देन प्रकारीभूता धर्मा धर्तव्यः। तथा च तद्वद्विशेष्यकत्वे सति तत्प्रकारकत्वं यथार्थानुभवस्य लक्षणम्॥ उदाहरणम्—रजते 'इदं रजतम्' इति ज्ञानं रजतत्ववद्विशेष्यकत्वे सति रजतत्वप्रकारकम्॥ 'तद्वन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकार(३)ताशालित्वम्, इति निष्कर्षः॥ अन्यथा यथाश्रुते, रङ्गरजतयोः 'इमे रजतरङ्गे' इत्याकारकसमूहा(४)वलम्बनभ्रमे ऽतिव्याप्तिः॥ तत्रापि रजतत्ववद्विशेष्यकत्व—रजतत्वप्रकारकत्वयो रङ्गत्ववद्विशेष्यकत्वरङ्गत्वप्रकारत्वयोः सत्त्वात्। उक्तनिष्कर्षेतु दर्शितभ्रमे नाति-

१ यथाघटत्ववति घटेघटत्वप्रकारकानुभवोयथार्थ इत्यर्थः॥

२ ननु भाष्यादि प्राचीनग्रन्थेषु प्रमाभेदेन विभागो ऽस्तीत्यत आह सैव प्रमेति॥

३ प्रकारतानिरूपित प्रकारिताशालि ज्ञानत्वमिति फलितोऽर्थः॥

४ ज्ञाने समूहावलम्बनत्वञ्च विशेष्यताद्वया व गाहित्वम्॥

व्याप्तिः समूहालम्बनभ्रमस्य रङ्गांशे रजतत्वावगाहित्वेन र-जतांशे रङ्गत्वावगाहित्वेन च रजतत्वप्रकारताया रजतत्व-वद्विशेष्यतानिरूपितत्वाभावात्, एवं रङ्गत्वप्रकारताया र-ङ्गत्ववद्विशेष्यतानिरूपितत्वाभावाच्चेति ॥

(पदकृ०) तद्वतीति ॥ तदेव प्रकारो यस्य स तथेत्य-र्थः । 'तद्वद्विशेष्यकतत्प्रकारकः' इति यावत् ॥ स्मृतिवार-णाय 'अनुभवः' इति । अयथार्थानुभवनिरसनाय 'तद्वति' इति ॥ निर्विकल्पकेऽतिव्याप्तिवारणाय 'तत्प्रकारकः'इति ॥ यथा रजतत्वाभाव वति शुक्तौ रजतत्व प्रकारकानुभवो ऽयथार्थ इत्यर्थः ॥

## तद(१)भाववति तत्प्रकारको ऽनुभवो ऽयथार्थः।

(न्यायबो०) अयथार्थानुभवं लक्षयति—तदभाववती-ति ॥ अत्रापि पूर्ववत् तदभाववद्विशेष्यतानिरूपिततन्निष्ठ-प्रकार(२)ताशालिज्ञानत्वं विवक्षणीयम् ॥ अन्यथा रङ्ग-रजतयोः 'इमे रङ्गरजते' इत्याकारकसमूहालम्बनप्रमाया-मतिव्याप्तिः । एतत्समूहालम्बनस्य रङ्गरजतोभयविशे-ष्यकत्वेन रजतत्वरङ्गत्वोभयप्रकारकत्वेन च रजतत्वाभाव-वद्रङ्गविशेष्यकत्वरजतत्वप्रकारकत्वयो रङ्ग-

---

१ अत्रैवासत् ख्यातिरिति शून्यवादी ॥ आत्मख्यातिरिति क्षपणक विज्ञानवादी ॥ अख्यातिरिति सांख्य प्रभाकरौ ॥ अनिर्व-चनीयाख्यातिरिति वेदान्ती ॥ अन्यथाख्यातिरिति नैयायिकवैशेष-कौ ॥ इति तु संज्ञामात्र प्रदर्शनं खण्डन मण्डन प्रकारश्च ग्रन्था-न्तरे ऽनुसन्धेय इति ॥

२ तन्निष्ट प्रकारतानिरूपित प्रकारिताशाल्यनुभवत्वमिति फलितोऽर्थः ॥

त्वाभाववद्रजतविशेष्यकत्वरङ्गत्वप्रकारकत्वयोश्च सत्वात् ॥ निष्कर्षे 'तु रजतांशे रजतत्वावगाहित्वेन रङ्गांशे रङ्गत्वावगाहित्वेन च रजतत्वप्रकारताया रजतत्वाभाववद्रङ्गविशेष्यतानिरूपितत्वाभावात्, एवं रङ्गत्वप्रकारताया रङ्गत्वाभाववद्रजतविशेष्यतानिरूपितत्वाभावात्, नातिव्याप्तिः ॥ उदाहरणम्—यथा शुक्तौ (इदं रजतम्) इति ॥

(पदकृ०) तदभाववतीति ॥ 'तदभाववद्विशेष्यकतत्प्रकारको ऽनुभवोऽयथार्थानुभवः' इति ॥ यथा शुक्तौ 'इदं रजतम्, इति ज्ञानम्। स्मृतिवारणाय 'अनुभवः' इति ॥ यथार्थानुभवनिरसनाय 'तदभाववति' इति ॥ निर्विकल्पक-(१)वारणाय तत्प्रकारकः इति ॥

## यथार्थानुभवश्चतुर्विधः—प्रत्यक्षानुमित्युपमितिशाब्दभेदात् ॥

(न्यायबो०) यथार्थानुभवं विभजते—'चतुर्विधः' इति ॥

(पदकृ०)यथार्थेति ॥ यथार्थानुभवः 'प्रत्यक्षमेव' इति चार्वाकाः, अनुमितिरपि' इति काणादबौद्धाः, उपमितिरपि' इति नैयायिकैकदेशिनः, 'शाब्दमपि' इति नैयायिकाः, 'अर्थापत्तिरपि' इति प्राभाकराः' 'अनुपलब्धिको ऽपि' इति भाट्टवेदान्तिनौ 'सांभविकैतिह्यकावपि इतिपौराणिकाः, चैष्टिको ऽपि' इति तान्त्रिकाः ॥ एतेषां मतेऽस्वरसं (२) सम्भाव्य तस्य चातुर्विध्यं स्पष्टं दर्शितम् ॥

---

१ निर्विकल्पकत्वञ्च प्रकारताद्य नवगाहि ज्ञानत्वम् ॥

२ अस्वरसबीजन्तु अर्थापत्त्यादि प्रमाणानां पूर्वोक्त प्रत्य-

तत्करण(१)मपि चतुर्विधम् प्रत्यक्षा(२)नुमानोपमानशब्दभेदात् ॥

क्षादि प्रमाणेष्वेवान्तर्भाव सम्भवे पृथक् कल्पनमनर्थकमिति बोध्यम्॥ तथाहि॥ उपपाद्य ज्ञानेनोपपादक कल्पनमर्थापतिः ॥ उपपाद्यज्ञानं करणम्॥ उपपादक ज्ञानञ्च फलम्॥ रात्रिभोजनमन्तरेण दिवाभुञ्जानस्यपीनत्वमनुपपन्नमिति तादृश पीनत्वमुपपाद्यम् ॥ रात्रिभोजनञ्चोपपादकम्॥ अर्थस्यापतिः कल्पना अर्थापतिः किम्वा अर्थस्यापतिः कल्पनायस्मादित्यर्थापत्ति शब्दः समास भेदेन फल करणायोर्वाचक इति बोध्यम् तथाच पीनोदेवदत्तो दिवान भुंक्ते इति दृष्टे श्रुतेवादिवाभुञ्जानस्यपीनत्वं रात्रि भोजनं विनानुपपन्नमित्यनुपपति ज्ञानं भवति इयमेवार्थापतिः ततोदेवदतोरात्रौ भुंक्ते इत्यनुभवोजायते॥ देवदत्तोरात्रिभोजी दिवाभुञ्जानत्वे सति पीनत्वादिति केवल व्यतिरेक्यनुमानेनैव॥ सिद्धौ तस्या अकिञ्चित्करत्वादिति॥ एवमभाव प्रत्यक्षे ऽप्यनुपलब्धिसह कृतेन्द्रियस्यैवकारणत्वेनानुपलब्धेः पृथक् प्रमाणत्वमकिञ्चित्करमिति॥ एवं शते पञ्चाशदिति निर्णयात्मक सम्भवो ऽनुमानान्तर्भूतः॥३॥ एवमिह वटे यक्षस्तिष्ठतीत्यैतिह्यमप्य ज्ञातमूल वक्तृकः शब्द एव ॥ ४ ॥ एवं चेष्टाप्यनुमान प्रयोजिकैवेति सिद्धं प्रमाणानां चातुर्विध्यमिति भावः ॥

---

१ प्रसंग संगत्याप्रमाणं विभजते ॥ तत्करणमिति ॥

२ अक्षमक्षं प्रतिजातामिति प्रत्यक्ष मित्येवं प्रत्यक्ष पदमिन्द्रियं परंतदेव विषय परंज्ञान परञ्चगौण्यावृत्यावोध्यम् ॥ एवमनुमीयते लिङ्ग द्वाराज्ञाप्यते ऽनेनेत्यनुमानं लिङ्ग परामर्शः ॥ एवमुप

(न्यायबो०) तत्करणमिति ॥ फलीभूतप्रत्यक्षादिकरणं चतुर्विधम् इत्यर्थः ॥ प्रत्यक्षादिचतुर्विधप्रमाणानां प्रमाकरणत्वं सामान्यलक्षणम् ॥ एकैकप्रमाणलक्षणं तु वक्ष्यते, प्रत्यक्षज्ञान, इत्यादिना ॥

(पदकृ०) तदिति॥ यथार्थानुभवात्मकप्रमायाः करणमित्यर्थः ॥

## असा (१) धारणं कारणं करणम् ॥

(न्यायबो०) करण लक्षणमाह-असाधारणमिति ॥ 'व्यापारवदसाधारणं कारणं करणम्, इत्यर्थः । असाधारणत्वं च 'कार्यत्वव्याप्यधर्मावच्छिन्नकार्यतानिरूपितकारणताशालित्वम्, इत्यर्थः । यथा दण्डादौ घटं प्रत्यसाधारणकारणत्वम् ॥ कार्यत्वव्याप्यो घटत्वादिरूपधर्मः, तदवच्छिन्नकार्यता घटे, तन्निरूपितकारणता दण्डे, अतो घटं प्रति दण्डो ऽसाधारणकारणम् । भ्रम्यादिरूपव्यापारवत्त्वाच्च करणम् साधारणत्वं च कार्यत्वावच्छिन्नकार्यतानिरूपितकारणताशालित्वम् ॥ ईश्वरेच्छादृष्टादेः कार्यत्वावच्छिन्नंप्रत्येव कारणत्वात्साधारणकारणत्वम् ॥

(पदकृ०) असाधारणमिति ॥ कालादिवारणाय 'असाधारण' इति ॥ व्यापारे ऽतिव्याप्तिवारणाय 'व्यापारवद्' इत्यपि देयम् व्यापारश्च द्रव्यान्यत्वे सति तज्जन्यत्वे सति तज्जन्यजनकः । ईश्वरेच्छादिवारणाय 'त-

---

मीयतेसादृश्येन ज्ञाप्यते ऽनेने[illegible]नानं सादृश्य ज्ञानम् एवं शप्यते निग्रहानुग्रहौ क्रियेते ऽनेनेति शब्दः ॥

१ प्रमाण ज्ञानं करणाधीन मतस्तावत्करणं निर्वक्ति ॥ असाधारणेति ॥

ज्जन्यत्वे सति' इति॥ कुलालजन्यत्वे सति कुलालजन्य-घटजनकत्वं कुलालपुत्रस्याप्यस्तिअतस्तत्रातिव्याप्तिवार-णाय प्रथमं सत्यन्तम्॥ दण्डरूपादिवारणाय तज्जन्य-जनकः' इति॥

## कार्यनियतपूर्ववृत्ति कारणम् (१)॥

(न्यायबो०) कारणं लक्षयति--कार्यनियतेति॥ कार्यं प्रति नियतत्वे सति पूर्ववृत्तित्वम्॥ नियतत्वविशेषणानु-पादाने पूर्ववर्तिनो रासभादेरपि घटादिकारणत्वं स्यात्, अतो'नियतत्वे सति, इति विशेषणम्॥ नियतपूर्ववर्तिनो दण्डरूपादेरपि घटकारणत्वं स्यात्, अतः 'अनन्यथासि-द्धत्वम्' अपि कारणलक्षणे निवेशनीयम्, दण्डरूपादेरन्य-थासिद्धत्वात्॥

✗ (पदकृ०) कार्येति॥ 'कार्यान्नियताऽवश्यंभाविनी पूर्व-वृतिःपूर्वक्षणवृत्तिर्यस्य तत्तथा' इत्यर्थः॥ अनियतरासभा-दिवारणाय 'नियत' इति। कार्यवारणाय'पूर्व(२)' इति। दण्डत्वादिवारणाय 'अनन्यथासिद्धत्व' विशेषणस्यावश्य-कत्वेन तत एव रासभादिवारणसम्भवे नियतपदमनर्थकम् एवं च 'अनन्यथासिद्धकार्यपूर्ववृत्ति कारणं' इति फलितम्॥ अनन्यथासिद्धत्वमन्यथा सिद्धिशुन्यत्वम्। अन्यथासि-

---

(१) अनन्यथासिद्धकार्य्याव्यवहित प्राक् क्षणावच्छेदेन का-र्य्याधिकरण वृत्यत्यन्ताभावप्रतियोगितानवच्छेदक धर्मवत्वमेव कारणत्वमितिनिष्कर्षः॥

२ आरण्यस्थ दण्डेपि स्वरूपयोग्यतायाः सत्वाद्घट कारणत्व निर्वाहः स्वरूप योग्यत्वञ्च कारणतावच्छेदकधर्मवत्व प्रकृते च दण्डित्वमेव तथेति बोध्यम्॥

द्विश्च 'अवश्यक्लृप्तपूर्ववर्तिन एवकार्यसम्भवेतत्सहभूतत्वम्'। यथा–अवश्यक्लृप्तनियत- पूर्ववर्तिभि र्दण्डादिभिरेव घट-रूपकार्यसम्भवे तत्सहभूतत्वं दण्डत्वादौ (१), इति तदन्यथासिद्धम् ॥

## कार्यं प्रागभावप्रतियोगि ॥

(न्यायबो०) कार्यं लक्षयति–प्रागिति ॥प्रागभावप्रति-योगित्वं कार्यस्य लक्षणम् ॥ कार्योत्पत्तेः पूर्वम् 'इह घटो भविष्यति, इति प्रतीतिर्जायते ॥ 'एतत्प्रतीतिविषयो' ऽभावः 'प्रागभावः तत्प्रतियोगि घटादिरूपं कार्यम् ॥

(पदकृ०) प्रागिति ॥ कालादिवारणाय 'प्राग्'(२) इति ॥ असम्भववारणाय प्रतियोगि' इति ॥

## कारणं त्रिविधम्(३)—समवाय्यसम-वायिनिमित्तभेदात् ॥

(न्यायबो०) कारणं त्रिविधमिति ॥ समवायिकारणम्, असमवायिकारणम् निमित्तकारणं चेति ॥

---

१ आदिपदेनदण्डरूपम् ।

२ प्राक् पदाभावे ऽन्यो ऽन्याभाव प्रतियोगित्वं पदार्थ मात्रे ऽस्तितस्य केवलान्ययित्वात् केवलान्वयित्वञ्च सर्वत्रविद्यमान-त्वम् तथाचान्यो ऽन्याभाव प्रतियोगित्वेन नित्यानामपि कार्य्य-त्वापतिः स्यादिति भावः ।

३ इदमपि भावकार्य्यमात्रे ऽभावकार्य्यमात्रेतु निमित्तकारण मात्रमपेक्षितमिति बोध्यम् ॥

**यत्समवेतं कार्यमुत्पद्यते तत्समवायिकारणम्। यथा तन्तवः पटस्य। पटश्च स्वगतरूपादेः(१)॥**

(न्यायबो०) समवायिकारणं लक्षयति—यत्समवेतमिति॥ 'यस्मिन् समवेतं सत् समवायेन सम्बद्धं सत् कार्यम् उत्पद्यते तत्समवायिकारणम्' इत्यर्थः॥ उदाहरणम्—'यथा तन्तवः' इति। 'तन्तुषु समवायेन सम्बद्धं सत् पटात्मकं कार्यमुत्पद्यते इति तन्तवः समवायिकारणम्, इत्यर्थः॥ सामान्यलक्षणं तु—'समवायसम्बन्धावच्छिन्नकार्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नकारणत्वं समवायिकारणत्वम्' इति। समवायसम्बन्धेन घटाधिकरणे कपालादौ कपालादेस्तादात्म्यसम्बन्धेनैव सत्त्वात् समवायसम्बन्धावच्छिन्नघटत्वावच्छिन्नकार्यतानिरूपिततादात्म्यसंबन्धावच्छिन्नकारणतायाः कपालादौ सत्त्वाल्लक्षणसमन्वयः॥ 'जन्यभावत्वावच्छिन्नं प्रति तादात्म्यसम्बन्धेन द्रव्यस्यैव कारणत्वात्। जन्यभावेषु द्रव्यगुणकर्मसु त्रिषु द्रव्यमेव समवायिकारणम्' अतो गुणादावपि द्रव्यमेव समवायिकारणम् इत्याशयेनाह 'पटश्च स्वगतरूपादेः' इति 'समवायिकारणम्' इत्यनुषज्यते॥

(पदकृ०) यदिति॥ यस्मिन् समवायसम्बन्धेन वर्तमानम्' तत् इति भावः। चक्रादिवारणाय 'समवेतम्' इति॥

**कार्येण कारणेन(२) वा सहैकस्मिन्नर्थे सम**

---

१ अत्रादि पदेन क्रिया परिग्रहः॥

२ नच सामानाधिकरणयोरेव कार्य्य कारण भाव इति

वेतत्वे सति कारणमसमवायिकारणम् । यथा तन्तुसंयोगः पटस्य । तन्तुरूपं पटगतरूपस्य ॥

(न्यायबो०) असमवायिकारणं लक्षयति—कार्येणेति असमवायिकारणं द्विविधम् कार्येण सहैकस्मिन्नर्थे समवेतं सद्यत् कारणं तदसमवायिकारणम्' इत्यन्वयः, 'कारणेन सहैकस्मिन्नर्थे समवेतं सद्यत् कारणं तदसमवायिकारणम्' इत्यन्वयः ॥ जन्यद्रव्यमात्रे ऽवयवसंयोगस्यैवासमवायिकारणत्वात् , पटात्मककार्ये तदवयवतन्तुसंयोगस्यैवासमवायिकारणत्वम्'दर्शयन् प्रथमसमुदाहरति यथा तंतुसंयोगः पटस्य' इति ॥ पटात्मककार्येण सहैकस्मिन्नर्थे तन्तौ समवेतंसत् समवायसम्बन्धेन वर्तमानं सत् पटात्म-

---

व्याप्यातन्तु रूपं पट गत रूपस्यासमवायिकारणं न स्यात् तयोः सामानाधिकरण्याभावात् ॥ अत आह ॥ कारणेनवेति ॥ कार्य्यं समवायिकारणेनेत्यर्थः ॥ तथाच पट समवायिकारणं तन्तु समुदायः तत्र च तन्तु रूपस्यापि सत्वमित्येवं स्वसमावायि समवाय सम्बन्धेन तन्तु रूपमपि पटेगतं तत्र च पटरूपस्य सत्वाद् भवति कार्य्य कारण भाव इति भावः ॥ स्वपदेन तन्तु रूपं ग्राह्यम् ॥ नचैवं परम्परा सम्बन्धस्य कार्य्य कारण भावनियामकत्वे यावद संश्लिष्ट पदार्थानामपि कार्य्य कारण भावः स्यात् परम्परा सम्बन्धस्यानुगतत्वात् नहि जगतिको ऽपि पदार्थः परम्परा संबन्धेना सम्बधो ऽस्तिइत्यत आह कार्य्येण कारणेनवेति ॥ तथाच न हि यावत् परम्परासम्बन्धानामाश्रयणं ॥ किन्तु समवायस्य स्व समवायि समवायस्यैव वाइमावेव शास्त्रे कार्य्यैकार्थ प्रत्यासतित्वेन कारणैकार्थ प्रत्यासतित्वेन च व्यवहृयेते इति ॥

कस्कार्यं प्रति तन्तु संयोगात्मकं कारणमसमवायिकारण-मित्यर्थः ॥ द्वितीयमुदाहरति—'तन्तुरूपम्' इति ॥ कार-णेन सह पटरूपसमवायिकारणीभूतपटेन सह एकस्मिन्नर्थे तन्तुरूपे ऽर्थे समवेतं सत् समवायसम्बन्धेन वर्तमानं सत् तन्तुरूपं पटरूपं प्रति कारणं भवति, अतो ऽसमवायिकारणं तन्तुरूपं पटरूपस्य ॥ सामान्य लक्षणं तु 'समवाय-सम्बन्धावच्छिन्नकार्यतानिरूपिता या समवायस्वसमवा-यिसमवेतत्वान्यतरसम्बन्धावच्छिन्ना कारणता तादृशकार-णताश्रयत्वम् असमवायिकारणत्वम्' इति ॥ द्रव्यासमवा-यिकारणीभूतावयवसंयोगादौ तु समवायसम्बन्धावच्छिन्न-घटत्वावच्छिन्नकार्यतानिरूपिता (१) समवायसम्बन्धाव-च्छिन्ना कपालद्वयसंयोगनिष्ठाकारणता कपालद्वयसं योगे वर्तते ॥ एवम् आद्यपतनक्रियायां आद्यस्यन्दनक्रियायां च गुरुत्वद्रवत्वे असमवायिकारणे भवतः । आद्यपत-नक्रियां प्रति आद्यस्यन्दनाक्रियां प्रति च समवायसम्बन्धे-नैव तयोः कारणत्वात् ॥ अवयविगुणादौ त्ववयवगुणादेः स्वसमवायिसमवेतत्वसम्बन्धेनैव कारणत्वात् तत्सम्बन्धाव-च्छिन्नकारणताश्रयत्वमवयवगुणादौ वर्तते ॥ अवयवगु-णभूतकपालतन्तुरूपादेः स्वशब्दग्राह्यकपालरूपतन्तुरूप-समवायिकपालतन्तुसमवेतत्वसम्बन्धेन घटपटादौ कपाल-रूपतन्तुरूपयोः सत्त्वात् ॥

४ (पदकृ०)कार्येणेति॥ कार्येण सह कारणेन सह वा एक-

---

१ निरूपितानिरूपकताच सरूप सम्बन्ध विशेष एवेति बोध्यम् ॥

स्मिन्नर्थे समवेतत्वे सति, आत्म (१) विशेषगुणभिन्नत्वे सति, यत्कारणं तदसमवायिकारणम् ॥ तन्तुसंयोगादाव-व्याप्तिवारणाय' कार्येण इति ॥ तन्तुरूपादावव्याप्तिवाणाय 'कारणेन' इति ॥ आत्मविशेषगुणे ऽतिव्याप्तिवारणाय 'आत्मविशेषगुणभिन्नत्वे सति' इति ॥ विशेषवारणाय (२) 'कारणम्' इति ॥

**तदुभयभिन्नं कारणं निमित्तकारणम् । यथा—तुरीवेमादिकं पटस्य ॥**

(न्यायबो०) तदुभयभिन्नमिति ॥ 'समवाय्यसमवायिकारणभिन्नम्' इत्यर्थः ॥

(पदकृ०) तदुभयभिन्नं कारणं निमित्तकारणम् इति ॥ समवाय्यसमवायिकारणवारणाय 'तदुभयभिन्नम्' इति । विशेषादा(३)वतिव्याप्तिवारणाय 'कारणम्' इति ॥

---

१ आत्म सामान्यगुणानामात्ममनः संयोगादीनां ज्ञानादिकं प्रत्यसमवायिकारणत्वे ऽपि तद्विशेष गुणानां ज्ञानादीनां कुत्राप्य-समवायिकारणत्वेनाक्लृप्तत्वात्तदनङ्गीकरणमिति नच ज्ञानादेरिच्छा-दिकं प्रत्यसमवायिकारणत्वमस्त्विति वाच्यं अवश्य क्लृप्तात्म मनः संयोगेनैव निर्वाहे ऽन्यत्र तत्कल्पनस्यानुभवविरुद्धत्वादत आह आत्म विशेष गुण भिन्नेति ॥

२ नित्य द्रव्य वृति विशेष पदार्थस्यनास्ति कुत्रापि कारण त्वमिति भाव : न च नित्यद्रव्यव्यावृतावेवतस्य कारणतातिवाच्यम् नित्यद्रव्यभेदस्य नित्यसिद्धत्वेन कार्य्यत्वाभावात् कार्य्यं कारणा-पेक्षेतिनियमाच्च ॥

३ अत्रादि पदेनाणुपरिमाणमतीन्द्रियसामान्यं च वोध्यम् ॥

**तदेतत्त्रिविधकारणमध्ये यदसाधारणं कारणं तदेव करणम् ॥**

( न्यायबो ) तदेतदिति ॥ 'यदसाधारणम्' इति ॥ व्यापारवत्वे सति,इत्यपि पूरणयिम्॥ अन्यथा तन्तुकपालसंयोगयोरतिव्याप्तिः, तन्तुकपालसंयोगयोरपि कार्यत्वव्याप्यपटत्वघटत्वाद्यवच्छिन्नं प्रतिकारणत्वादसाधारणत्वमस्त्येवेति, अतस्तत्र करणत्ववारणाय 'व्यापारवत्वे सति' इति करणलक्षणे विशेषणं देयम् ॥ व्यापारत्वं च तज्जन्यत्वे सति तज्जन्यजनकत्वम् ॥ भवति हि दण्डजन्यत्वे सति दण्डजन्यघटजनकत्वाद् भ्रम्यादेर्दण्डव्यापारत्वम् ॥ एवं कपालसंयोगतन्तुसंयोगादेरपि कपालतन्तुव्यापारत्वम्(१)कपालसंयोगतन्तुसंयोगयोः कपालजन्यत्वे तन्तुजन्यत्वे सति तज्जन्यघटपटजनकत्वात् ॥ करणलक्षणे ऽसाधारणत्वविशेषणानुपादाने ईश्वराद्दृष्टादेरपि व्यापारवत्वे सति कारणत्वस्य सत्वात् तत्रातिव्याप्तिवारणाय 'असाधारण' इति पदोपादानम् ॥

(पदकृ०) तदेतदिति ॥ यस्मात्कारणात् करणत्वघटकं कारणमुपदर्शितम् तस्मादेतत्त्रिविधसाधकमध्ये यत्साधकतमं तदेव करणम् इति भावः ॥ इति करणप्रपञ्चः ॥

**तत्र प्रत्यक्षज्ञानकरणं (२) प्रत्यक्षम् ।**

---

१ समवायिकारणापेक्षया कपाल संयोग तन्तु संयोगयोर्व्यापारत्वं घटपट रूपकार्य्यापेक्षयाचासमवायिकारणत्वमतएकस्मिन् धर्मिणि धर्मद्वय समावेशोन विरुद्ध्यते इति भावः ॥

२ प्रत्यक्षशब्दो ऽपि वृत्तिभेदेन ज्ञान परइन्द्रिय परो विषय परश्चेति बोध्यम् ॥

(न्यायबो०) षड्विधेन्द्रियभूतप्रत्यक्षप्रमाणस्य लक्षणमाह—तत्रेति ॥ प्रमाणभूतेषु, प्रत्यक्षात्मकं यज्ज्ञानं चाक्षुषादिप्रत्यक्षं (तत्) प्रति कारणं व्यापारवदसाधारणम् इन्द्रियं भवति, अतः प्रत्यक्षज्ञानकरणत्वं प्रत्यक्षस्य लक्षणम् ॥ आद्यसन्निकर्षातिरिक्तचतुर्विधसन्निकर्षाणां समवायघटितत्वेनेन्द्रियजन्यत्वाभावाद्व्यापारत्वं न सम्भवति, इतीन्द्रियमनःसंयोगस्यैव षड्विधप्रत्यक्षे जननीये इन्द्रियव्यापारताबोध्या

(पदकृ०) तत्रेति ॥ प्रमाणचतुष्टयमध्ये ॥ दंडादिसंयोग वारणाय 'ज्ञानं' इति ॥ अनुमानादिवारणाय 'प्रत्यक्ष' इति ॥

**(ज्ञानाकरणकं ज्ञानं प्रत्यक्षम्) ॥ इन्द्रियार्थसंनिकर्षजन्यं ज्ञानं प्रत्यक्षम्** (१)**। तद्द्विविधम्—निर्विकल्पकं सविकल्पकं चेति ॥**

(न्यायबो०) प्रत्यक्षप्रमाणलक्षणमुक्त्वा प्रत्यक्षप्रमालक्षणमाह—ज्ञानाकरणकमिति । क्षेपकं (२) लक्षणमिदम् ॥ ज्ञानं व्याप्तिज्ञानं सादृश्यज्ञानं पदज्ञानं च तदेव करणं येषां ते ज्ञानकरणका अनुमित्युपमितिशाब्दाः, ज्ञानकरणकं, न भवतीति ज्ञानाकरणकं [तत्त्वम्] प्रत्यक्षलक्षणम् । प्रत्यक्षे इन्द्रियाणामेव करणत्वात्, न तु ज्ञानस्य करणत्वम् ॥ इदं लक्षणमीश्वरप्रत्यक्षसाधारणम् ईश्वरप्रत्यक्षस्याजन्यत्वात् । अतो जन्यप्रत्यक्षस्यैव लक्ष्यत्वमादाय तल्लक्षणम्—इन्द्रियार्थसंनिकर्षेति ।

---

१ अत्र संनिकर्षपरम्पराचेत्थम् ॥ आत्मामनसायुज्यते मन इन्द्रयेण इन्द्रियमर्थेन ततो घटादीनां प्रत्यक्षमिति ॥

२ प्रकृतग्रन्थाघटकमित्यर्थः ॥

जन्यप्रत्यक्षस्यैव लक्ष्यत्वाभिप्रायेणेदम् ॥ प्रत्यक्षं द्विधा विभजते–'निर्विकल्पकम्' इति ॥

x (पदकृ०) इन्द्रियार्थेति ॥ 'इन्द्रियं चक्षुरादिकम्' अर्थो घटादिः, तयोः संनिकर्षः संयोगादिः, तज्जन्यं ज्ञानं प्रत्यक्षम्' इत्यर्थः । संनिकर्षध्वंसवारणाय 'ज्ञानम्' इति । अनुमित्यादिवारणाय 'इन्द्रियार्थसंनिकर्ष इति ॥ ननु 'सोपनेत्रचक्षुषा कथं पदार्थग्रहणम्, चक्षुष उपनेत्रनिरुद्धत्वेन पदार्थेन संनिकर्षाभावात्' 'कथं वा स्वच्छजान्हवीसलिलावृतमत्स्यादेश्चक्षुषा ग्रहणम्' इति चेत् ॥ न स्वच्छद्रव्यस्य तेजोनिरोधकत्वाभावेन तदन्तश्चक्षुः प्रवेशसम्भवात् ॥ नचईश्वरप्रत्यक्षे ऽव्याप्तिः(१) । इति वाच्यम् । अत्र जन्यप्रत्यक्षस्यैव लक्षितत्वात्॥

## तत्र निष्प्रकारकं ज्ञानं निर्विकल्पकम् ॥

(न्यायबो०) निष्प्रकारकमिति ॥ 'प्रकारताशून्यत्वमेव निर्विकल्पकत्वम्' इत्यर्थः ॥ निर्विकल्पके चतुर्थी विषयता स्वीक्रियते नतु त्रिविध (२) विषयतामध्ये काऽपि तत्रास्ति-अतो 'विशेष्यताशून्यज्ञानत्वम्' इत्यपि लक्षणं सम्भवति ॥

( पदकृ० ) तत्र निष्प्रकारकमिति ॥ सविकल्पकेऽतिव्याप्तिवारणाय 'निष्प्रकारक' इति । प्रकार ( ३ ) वारणाय 'ज्ञानम्' इति ॥

---

१ तस्य चक्षुरादीन्द्रिय शून्यत्वादिति भावः ।

२ विषयताया स्त्रिविधत्वंच विशेष्यताख्य प्रकारताख्य संसर्गताख्यविषयताभेदेनेति बोध्यम् ॥

३ यद्यपि नीलोघट इत्यादि स्थले प्रकारे ऽपि प्रकारान्तरं भासते तथा च प्रकारतावारणायेत्यनर्थकं स्यात्तथाप्ययं घट

**सप्रकारकं ज्ञानं सविकल्पकम् ॥ यथा-'डित्थोऽयम्, ब्राह्मणोऽयम्, श्यामोऽयम्' इति ॥**

(न्यायबो०) सप्रकारकमिति ॥ विषयताया ज्ञाननिरूपितत्वात् ज्ञानस्य विषयतानिरूपकत्वेन, प्रकारता(१) निरूपकज्ञानत्वं सविकल्पकस्य लक्षणम् ॥ उदाहरणम्—यथेति । इदंत्वावच्छिन्नविशेष्यता(२)निरूपितडित्थत्वप्रकारताशालिज्ञानं ब्राह्मणत्वप्रकारताशालिज्ञानं च सविकल्पकमित्यर्थः ॥

(पदकृ०) सप्रकारेति ॥ घटादिवारणाय 'ज्ञानम्' इति निर्विकल्पकवारणाय 'सप्रकारकम्' इति ॥

**५ प्रत्यक्षज्ञानहेतुरिन्द्रियार्थसंनिकर्षः षड्विधः—संयोगः, संयुक्तसमवायः, संयुक्तसमवेतसमवायः, समवायः, समवेतसमवायः, विशेषणविशेष्यभावश्चेति ॥**

(न्यायबो०) चाक्षुषादिषाड्विधप्रत्यक्षकारणीभूतान्षाड्विधसंनिकर्षान्विभजते 'संयोगः' इत्यादिना ॥ द्रव्यवृत्तिलौकिकविषयतासम्बन्धेनचाक्षुषत्वावच्छिन्नं प्रति चक्षुःसंयोगः कारणम् । द्रव्यसमवेतवृत्तिलौकिकविषयतासम्बन्धेन

---

इत्यादि स्थले घटत्वस्य स्वरूपेणभानादतः साधूक्तं प्रकारतावारणायेति ॥

(१) प्रकारताच ज्ञानीय विषयताविशेषः ॥

(२) इत्यपि ज्ञानीय विषयता विशेष इति बोध्यम् ॥

चाक्षुषत्वावच्छिन्नं प्रति चक्षुःसंयुक्तसमवायस्य हेतुत्वम् । द्रव्यसमवेतसमवेतवृत्तिलौकिकविषयतासम्बन्धेन चाक्षुषत्वावच्छिन्नं प्रति चक्षुःसंयुक्तसमवेतसमवायस्य हेतुत्वम् । द्रव्यग्राहकाणीन्द्रियाणि चक्षुस्त्वङ्मनांसि त्रीण्येव । अन्यानि घ्राणरसनश्रवणानि तु गुणग्राहकाणि ॥ अतस्त्वगिन्द्रियस्थले द्रव्यवृत्तिलौकिकविषयतासम्बन्धेन त्वाचत्वावच्छिन्नं प्रति त्वक्संयोगस्य हेतुता ॥ एवं द्रव्यसमवेतत्वाचत्वावच्छिन्नं प्रति त्वक्संयुक्तसमवायस्य हेतुता, द्रव्यसमवेतसमवेतोष्णत्वशीतत्वादिजातिस्पार्शनप्रत्यक्षे त्वक्संयुक्तसमवेतसमवायस्य हेतुता, एवम् आत्मरूपद्रव्यमानसप्रत्यक्षे मनःसंयोगस्य हेतुता आत्मसमवेतसुखादिमानसप्रत्यक्षे मनःसंयुक्तसमवायस्य हेतुता, आत्मसमवेतसमवेतसुखत्वादिमानसप्रत्यक्षे मनःसंयुक्तसमवेतसमवायस्य हेतुता ॥ रसनघ्राणयोस्तु रसगन्ध–तद्गतजातिग्राहकत्वेन द्वितीयतृतीययोः संनिकर्षयोरेव तत्र हेतुता वाच्या ॥ श्रवणेन्द्रियस्याकाशरूपत्वेन शब्दस्याकाशगुणत्वेन श्रवणेन्द्रियेण समं शब्दस्य समवायः संनिकर्षः । शब्दवृत्तिशब्दत्वजातिविषयकश्रावणप्रत्यक्षे समवेतसमवायस्य हेतुता ॥

अभावप्रत्यक्षे विशेषणविशेष्यभावो नाम विशेषणतासंनिकर्षः । पञ्चविधसंनिकर्षोपरि विशेषणता योजनीया । तथाहि । द्रव्याधिकरणकाभावप्रत्यक्षे संयुक्तविशेषणता । द्रव्यसमवेताधिकरणकाभावप्रत्यक्षे इन्द्रियसंयुक्तसमवेतविशेषणता । द्रव्यसमवेतसमवेताधिकरणकाभावप्रत्यक्षे इन्द्रियसंयुक्तसमवेतसमवेतविशेषणता ॥ संयोगस्थाने संयुक्तत्वं घटयित्वा समवायस्थाने समवेतत्वपदं घटयित्वा अभावप्रत्यक्षस्थले निर्वाह्यम् ॥ यथा घटद्रव्यसमवेतं घटत्वं पृथिवीत्वादि रूपादिकं च ॥ तत्र नीलादौ पीत-

त्वाभावः, घटत्वादिजातौ पटत्वाभावश्च वर्तते। स चाभावः संयुक्तसमवेताविशेषणतासंनिकर्षेण गृह्यते। (एवं नीलत्वादि जातौ पीतत्वाभावोऽपीन्द्रियसंयुक्तसमवेतसमवेतविशेषणता संनिकर्षेण गृह्यते।) पटसमवेतं नीलं, तत्समवेतं नीलत्वं, तद्विशेषणता पीतत्वाभावे वर्तते इति संक्षेपः॥

(पदकृ०) प्रत्यक्षेति॥ तच्च प्रत्यक्षं षड्विधम्-घ्राणज-रासन-चाक्षुष-श्रौत्र त्वाच मानसभेदात्॥ ननु 'प्रत्यक्षकारणीभूतेन्द्रियसंनिकर्षप्रत्यक्षसामानाधिकरण्यघटकः संनिकर्षः कः' इत्यपेक्षायां विभज्य दर्शयति-प्रत्यक्षेति। 'लौकिकप्रत्यक्ष' इत्यर्थः॥

**चक्षुषा घटप्रत्यक्षजनने संयोगः संनिकर्षः।**

(पदकृ०) संयोगमुदाहरति-चक्षुषेति॥ तथा च 'द्रव्यचाक्षुषत्वाचमानसेषु संयोग एव संनिकर्षः' इति भावः॥

**घटरूपप्रत्यक्षजनने संयुक्तसमवायः संनिकर्षः। चक्षुःसंयुक्त घटे रूपस्य समवायात्॥**

(पदकृ०) घटरूपेति॥ 'चक्षुषा' इत्यनुषज्जते॥ तथा च द्रव्यसमवेतचाक्षुषरासनघ्राणस्पार्शनमानसेषु संयुक्तसमवाय एव संनिकर्ष इत्यर्थः॥

**रूपत्वसामान्यप्रत्यक्षे संयुक्तसमवेतसमवायः संनिकर्षः। चक्षुःसंयुक्ते घटे रूपं समवेतम्, तत्र रूपत्वस्य समवायात्॥**

(पदकृ०) रूपत्वेति॥ रूपत्वात्मकं यत्सामान्यम्, तत्प्रत्यक्ष इत्यर्थः अत्रापि 'चक्षुषा' इत्यनुषज्यते॥ तथा च 'द्रव्यसमवेतसमवेतचाक्षुषरासनघ्राणजस्पार्शनमानसेषु सं-

युक्तसमवेतसमवाय एव संनिकर्षः इति भावः ॥ अथ 'द्रव्य-तत्समवेतप्रत्यक्षेऽपि संयुक्तसमवाय एव संनिकर्षोऽस्तु' इति चेत् ॥ नैतत् ईश्वरा (१) त्मादेरनध्यक्षत्वप्रसंगात् ॥

**श्रोत्रेण शब्दसाक्षात्कारे समवायः संनिकर्षः कर्णविवरवर्त्याकाशस्य श्रोत्रत्वात् । शब्दस्याकाशगुणत्वात् । गुणगुणिनोश्च समवायात् ॥**

(पदकृ०) समवायसंनिकर्षमुदाहरति-श्रोत्रेणेति॥'जननीये' इति शेषः ननु 'श्रोत्रशब्दयोः कथं समवायः' इत्यपेक्षमाणं प्रति तमुपपाद्य दर्शयति-कर्णेति ॥ अथ समवायस्य नित्यत्वेन शब्दप्रत्यक्षे को व्यापारः' इति चेत् 'शब्दः-श्रोत्रमनः संयोगो वा' इति गृहाण ॥

**शब्दत्वसाक्षात्कारे समवेतसमवायः संनिकर्षः । श्रोत्रसमवेते शब्दे शब्दत्वस्य समवायात् ॥**

(पदकृ०) शब्दत्वेति ॥ श्रोत्रेण' 'जननीये' इत्यनुकर्षशेषौ ॥

**अभावप्रत्यक्षे विशेषणविशेष्यभावः सं-**

---

१ चक्षुः संयुक्त कपाल तंतु समवेतत्वेन घठपटादीनां प्रत्यक्षं भविष्यत्येवेति शंकाभिप्रायः ॥ जीवात्म परमात्मनोश्च निरवयवत्वेन स्वावयव समवेतत्वाभावात् तादृश सबन्धेन प्रत्यक्षं नस्यादित्युतरम् आदिपदेन परमाणवो ग्राह्याः योगजधर्मेणातीन्द्रियाणामपि प्रत्यक्षत्वस्वीकारादिति भावः ॥

निकर्षः(१)। घटाभाववद्भूतलम्, इत्यत्र चक्षुः संयुक्ते भूतले घटाभावस्य विशेषणत्वात्॥

(पदकृ०) विशेषणेति॥ विशेषणभावो विशेष्यभावः। इन्द्रियसम्बद्धविशेषणत्वम्, इन्द्रियसम्बद्धविशेष्यत्वम्, इति यावत्॥ विशेषणभावसंनिकर्षमुपपाद्य दर्शयति-घटाभाववदिति॥ 'इह भूतले घटो नास्ति' इत्यादौ विशेष्यतासंनिकर्षोऽवसेयः। सप्तम्यन्तस्य विशेषणत्वात्॥

एवं संनिकर्षघटकजन्यं ज्ञानं प्रत्यक्षम्॥

(पदकृ०) प्रत्यक्षप्रमाणमुपसंहरति। 'उपदर्शित क्रमेण इत्यर्थः॥

तत्करणमिन्द्रियम्। तस्मात् 'इन्द्रियं प्रत्यक्षप्रमाणम्' इति सिद्धम्॥

---

१ अत्रैवलौकिक सन्निकर्ष इवालौकिक सन्निकर्षोऽपि त्रिविधः शास्त्रे निरूपितः सच सामान्यलक्षणो ज्ञानलक्षणोयोगजधर्मरूपश्चेति तत्राद्यः इन्द्रिय सम्बद्ध विशेष्यक ज्ञाने प्रकारीभूतो घटत्वादिः इन्द्रिय सम्बद्ध विशेष्यके घटो ऽय मिति लौकिक प्रत्यक्षे घटत्वं प्रकारः तदनन्तरं तत्सन्निकर्षेण सर्वे घटाघटत्ववन्त इत्यलौकिक प्रत्यक्षम्॥ द्वितीयश्च सुरभिचंदन खण्डमित्यादौ। अत्र चन्दन खण्डांसे लौकिकं सौरभांशे चालौकिकं सौरभस्मरण रूपज्ञानमेव सन्निकर्षः सौरभस्य चाक्षुषत्वासम्भवात्॥ तृतीयश्च युक्त युञ्जानभेदेन योगिनां द्वैविध्येन द्विविधः॥ तत्रयुक्तस्य योगिनः सवर्दा यावत्पदार्थभानम्॥ युञ्जानस्य च चिन्तासह कारेण कालविशेषे एवेति भावः॥

(पदकृ०) ननु सिद्धान्ते प्रत्यक्षज्ञानकरणमिन्द्रियार्थसंनिकर्षः किं न स्यात्' इति चेत् ॥ 'न' इत्याह-तत्करणमिति ॥ प्रत्यक्षप्रमाणं निगदयति-तस्मादिति ॥ प्रत्यक्षप्रमाकरणत्वादित्यर्थः ॥ सिद्धमिति ॥ न्यायसिद्धान्ते सिद्धमित्यर्थः ॥

इति प्रत्यक्षपरिच्छेदः समाप्तः ।

## अनु (१) मितिकरणमनुमानम् ॥

(न्यायबो०) अनुमानं लक्षयति-अनुमितीति ॥ अनुमितौ व्याप्तिज्ञानं करणम् [२] परामर्शो व्यापारः, अनुमितिः

---

१ प्रत्यक्षानुमानयोः परस्परोपजीव्योपजविक भावत्वेन प्रत्यक्षानन्तरमनुमाननिरूपणम् ॥ उपजीव्यतेजन्यतेऽनेनेति उपजीव्यंकारणम् ॥ तथा च कार्य्य कारण भाव संगत्याप्रत्यक्षानन्तर मनुमान निरूपणमितिभावः ॥ संगतिश्चषोढा=तथाहि=सप्रसंग उपोद्घातो हेतुता ऽवसर स्तथा=निर्वाहकैककार्य्यैक्येषोढासङ्गतिरिष्यते =इति ॥

२ अनुमितौ लिंग परामर्शस्य करणत्वमिति प्राचीनमतं व्याप्ति ज्ञानस्य करणत्वमिति च नवीनमतं=मूलग्रन्थश्च प्रायः प्राचीनमताभिप्रायेणैव=सव्यापारस्यवासाधारणकारणस्य करण तेति च मतद्वय साधारणम् अतएव मूल कारेण स्वकृत व्याख्या यां करणनिरूपणावसरे=चक्षुषाघट प्रत्यक्षे जननीयेचक्षुः संयोग रूपव्यापारः तत्राति व्याप्ति वारणाय व्यापारवत्वमित्यपिदेयमित्युक्तम् तथाच लिंग परामर्श रूप करणस्य फलायोग व्यवच्छिन्नत्व लक्षणो व्यापारो बोध्यः प्रकृत व्याख्याद्वयञ्च नवीन प्राचीन भेदेनाविरुद्धमिति ध्येयम् ॥ किम्वा यथा ऽनुमितिपद-

फलं कार्यमित्यर्थः॥ परामर्शस्य व्याप्तिज्ञानजन्यत्वाद् व्याप्ति ज्ञानजन्यानुमितिजनकत्वाच्च तज्जन्यत्वे सति तज्जन्यजनकत्वरूपव्यापारलक्षणमुपपन्नम् ॥ अनुमितिकरणत्वमनुमानस्य लक्षणम्। अनुमानम् च व्याप्तिज्ञानम् एतस्य परामर्शरूपव्यापारद्वारा अनुमितिं प्रति असाधारणकारणतया ऽनुमितिकरणत्वमुपपन्नम् ॥

(पदकृ०) प्रत्यक्षानुमानयोः कार्यकारणभावसंगतिमभिप्रेत्यप्रत्यक्षानन्तरमनुमानं निरूपयति-अनुमितीति॥ 'अनुमितेः करणम् अनुमानम्' इत्यर्थः ॥ तच्च 'लिङ्गपरामर्श एव' इति निवेदयिष्यते ॥ कुठारादावतिव्याप्तिवारणाय 'अनुमिति' इति। प्रत्यक्षादावतिव्याप्तिवारणाय 'अनु (१)' इति ॥

## परामर्शजन्यं ज्ञानमनुमितिः ॥

(न्यायबो०) परामर्शजन्यमिति ॥ 'परामर्शजन्यत्वे सति' इति सतिसप्तम्या विशिष्टत्वमर्थः। परामर्शजन्यत्वविशिष्टज्ञानत्वमनुमितेर्लक्षणम् ॥ तत्र ज्ञानत्वमात्रोपादाने प्रत्यक्षादावतिव्याप्तिः, अतस्तद्वारणाय 'परामर्शजन्यत्वे सति' इति विशेषणोपादानम्। विशेषणमात्रोक्तौ तु तद्ध्वंसे ऽतिव्याप्तिः, अतोज्ञानत्वोपादानम् ॥

---

मनुमिति निष्ट कार्य्यतानिरूपक सम्बन्धेनानुमिति तत्कारण ज्ञान परमिति शिरोमणि कारस्तद्वदत्रापि परामर्श पदमजहत्स्वार्थ लक्षणयापरामर्श तत्कारण ज्ञान परमिति सारम् ॥

१ मानंमितिः डुमिञ् प्रक्षेपणे इत्यस्माद्धातोः स्त्रियां भावे क्तिन् = अनुप्रत्यक्षादितः पश्चान्मीयते इत्यनुमितिः ॥ एवंहिकरणव्युत्पत्त्या ऽनुमानशब्दो बोध्य इति भावः ॥

(पदकृ०) ननु अनुमितेरेव दुर्निरूप्यत्वात् तद्घटित-मनुमानमपि दुर्निरूपम्' इत्यत आह परामर्शेति ॥ प्रत्यक्षादा-वति व्याप्तिवारणाय 'परामर्शजन्यम्' इति । परामर्शध्वं-सवारणाय 'ज्ञानम्' इति । परामर्शप्रत्यक्ष ( १ ) वारणाय 'हेत्वविषयकम्' इत्यपि बोध्यम् ॥

**व्याप्तिविशिष्टपक्षधर्मताज्ञानं परामर्शः । यथा-वह्निव्याप्यधूमवानयं पर्वतः, इति ज्ञान परामर्शः। तज्जन्यम् 'पर्वतो वह्निमान्' इति ज्ञानमनुमितिः ॥**

(न्या.यबो०) व्याप्तिविशिष्टेति ॥ 'व्याप्तिविशिष्टं च तत्पक्षधर्मताज्ञानं च' इति कर्मधारये विशिष्टपदस्य प्रका-रकपरत्वात् 'पक्षधर्मताज्ञानम्' इत्यत्र षष्ठ्या विषयत्वबोध-नात् धर्मतापदस्य सम्बन्धार्थकत्वाच्च कर्मधारयसमासे समस्यमानपदार्थयोरभेदसंसर्ग लाभेन च 'व्याप्तिप्रका-रकाभिन्नं यत् पक्षसम्बन्धिविषयकं ज्ञानं तत् परामर्शः इति लभ्यते । एवं सति 'धूमो वह्निव्याप्यः घटवान् पर्वतः' इति समूहालम्बने परामर्शलक्षणं गतम्, तद्वारणाय पक्ष-विशेष्यतानिरूपिता या हेतुनिष्ठप्रकारता, तन्निरूपिता या व्याप्तिनिष्ठप्रकारता, तच्छालि ज्ञानं परामर्शः' इति निष्कर्षः॥

---

१ अयम्भावः वह्नि व्याप्यधूमवान् पर्वत इत्याकारक ज्ञान विषयक ज्ञानवानहमित्यत्र अनुव्यवसायात्मक द्वितीयज्ञानस्य पूर्व परामर्श रूप ज्ञान जन्यत्वात् व्यवसायस्यानुव्यवसाये विषयता सम्बन्धेन कारणत्व नियमादतो हेत्वविषयकेति साधूक्तम् ॥

एतादृशपरामर्शजन्यत्वे सति ज्ञानत्वम् अनुमितेर्लक्षणम् ॥ अनुमितिपरामर्शयोर्विशिष्यकार्यकारणभावश्चेत्थम्—'पर्वतत्वावच्छिन्नोद्देश्यतानिरूपितसंयोगसम्बन्धावच्छिन्नत्वावच्छिन्नवह्निविधेयताकानुमितित्वावच्छिन्नं प्रति वह्निव्याप्तिप्रकारतानिरूपिताया धूमवत्त्वावच्छिन्ना प्रकारता, तन्निरूपितायापर्वतत्वावच्छिन्ना विशेष्यता तच्छालिनिर्णयः कारणम्' इति ॥ स च निर्णयः 'वह्निव्याप्यधूमवान् पर्वतः' इत्याकारकः ॥

(पदकृ०) व्याप्तिविशिष्टेति ॥ 'विषयिता(१)सम्बन्धेन व्याप्तिविशिष्टपक्षधर्मताज्ञानं परामर्शः' इत्यर्थः ॥ घटादिज्ञानवारणाय 'पक्षधर्मता' इति। 'धूमवान् पर्वतः' इति ज्ञानवारणाय 'व्याप्तिविशिष्ट—' इति ॥ तदिति ॥ 'परामर्शजन्यम्' इत्यर्थः ॥

**'यत्रयत्र धूमस्तत्र तत्र वन्हिः' इति साहचर्यनियमो व्याप्तिः ॥**

(न्यायबो०) यत्रयत्रेति। यत्र पद वीप्सावशाद्धूमाधिकरणे यावति वह्निमत्त्वलाभात् यावत्पदमहिम्ना धूमव्यापकत्वं वन्हौ लब्धम्, तदेव स्पष्टयति-साहचर्यनियम इति ॥ एतदर्थस्तु 'नियतसाहचर्यं व्याप्तिः' इति। नियतत्वं व्यापकत्वम्। साहचर्यं नाम समानाधिकरण्यम् तथाच 'धूमव्यापकवान्हिसामानाधिकरण्यं व्याप्तिः' इत्यर्थः ॥ अत्र

१ विषयिता ज्ञान धर्म विशेषः ॥ विषयताच विषयधर्मविशेषः विषयितासम्बन्धेन वस्तु मात्रं ज्ञाने विषयतासम्बन्धेन च ज्ञान मात्रं वस्तुनिवर्तत एवेति बोधव्यम् ॥

धूमव्यापकत्वं नाम धूमसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकधर्मवत्त्वम्। तादृशधर्मो वह्नौ वह्नित्वम्। तथाहिधूमाधिकरणे ॥ पर्वतमहानसचत्वरादौ वर्तमानोऽभावः घटत्वावच्छिन्नप्रतियोगिताकाभावो, न तु वह्नित्वावच्छिन्नप्रतियोगिताकोऽभावः । कुतः—पर्वतादौ वह्नेः सत्त्वात् । एवं सति धूमाधिकरणे पर्वतादौ वर्तमानस्य घटाभावस्य प्रतियोगितावच्छेदकं घटत्वम्, पटाभावस्य प्रतितोगितावच्छेदकं पटत्वम्,अनवच्छेदकं वह्नित्वम्, तादृशं वह्नित्वं वह्नौ वर्तते । अतो धूमव्यापकत्वं वह्नौ वर्तते, ( तस्याधिकरणे पर्वतादौ वृत्तित्वं धूमे वर्तते ) इति । इयमन्वयव्याप्तिः सिद्धान्तानुसारेण ॥ पूर्वपक्षीयव्याप्तिस्तु 'साध्याभाववद्वृत्तित्वम्'–साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकाभाववन्निरूपितं यद्धेतुतावच्छेदकसम्बन्धावच्छिन्नवृत्तित्वम्, तादृशवृत्तित्वत्वावच्छिन्नप्रतियोगिताकाभावोव्याप्तिः ॥ तच्च केवलान्वयिन्यव्याप्तम्' इति सिद्धान्तानुसारेण लक्षणसमन्वयः ॥

(पदकृ०) यत्रयत्रेति॥-'तत्र तत्राग्निः' इति व्याप्ते रभिनयः(१)। 'साहचर्यनियमः'इति लक्षणम् । 'सहचरति' इति सहचरः,तस्य भावःसाहचर्यं समानादिकरण्यम्'इति यावत्। तस्य नियमो व्याप्तिरित्यर्थः । सचाव्यभिचरितत्वम् । तच्च व्यभिचाराभावः।व्यभिचारश्च साध्याभाववद्वृत्तित्वम्। तथा च साध्याभाववद्वृत्तित्वं व्याप्तिरिति पर्यवसन्नम् 'महानसो वह्निमान् धूमात्, इत्यादौ 'साध्यो वह्निः तदभाववाञ्जलह्र-

१ अभिनयश्चाङ्गुलि निर्देशेन पदार्थ प्रकाशनमिति ।

द्रादिः तद्वृत्तित्वं नौकादौ, अवृत्तित्वं प्रकृते हेतुभूते धूमे' इति कृत्वा लक्षणसमन्वयः ॥ 'धूमवान् वन्हेः' इत्यत्र साध्यो धूमः, तदभाववत् अयोगोलकम्, तद्वृत्तित्वमेव वन्ह्यादौ' इति नातिव्याप्तिः

## व्याप्यस्य पर्वतादिवृत्तित्वं पक्षधर्मता

( पदकृ० ) ननु ज्ञातेयं व्याप्तिः, 'पक्षधर्मताज्ञानम्' इत्यत्र 'का नाम पक्षधर्मता' इत्यपेक्षमाणं प्रति तत्स्वरूपं निरूपयति—व्याप्यस्येति ॥ 'व्याप्यो नाम व्याप्त्याश्रयः स च धूमादिरेव, तस्य पर्वतादिवृत्तित्वं पक्षधर्मता' इत्यर्थः ॥

## अनुमानं द्विविधम्—स्वार्थं परार्थं च ।

(पदकृ०) अथ 'कथमनुमानमनुमितिकरणम्, कथं वा तस्मादनुमितिजनिः' इति जिज्ञासमानं प्रति, लाघवादनुमानविभागमुखेनैव बुबोधयिषुरनुमानं विभजते—अनुमानमिति ॥ द्वैविध्यं दर्शयति स्वार्थं परार्थं चेति ॥

स्वार्थं स्वानुमितिहेतुः । तथाहि—स्वयमेव भूयोदर्शनेन 'यत्र यत्र धूमस्तत्र तत्राग्निः' इति महानसादौ व्याप्तिं गृहीत्वा पर्वतसमीपं गतः, तद्गते चाग्नौ संदिहानः पर्वते धूमं पश्यन् व्याप्तिं स्मरति(१) 'यत्र धूमस्त-

---

१ एक सम्बन्धि ज्ञानस्यापर सम्बन्धि स्मारकत्व नियमादिति भावः ॥

त्राग्निः' इति । तदनन्तरं 'वन्हिव्याप्यधूमवानयं पर्वतः' इति ज्ञानमुत्पद्यते । अयमेव लिङ्गपरमर्श इत्युच्यते । तस्मात् 'पर्वतो वन्हिमान्' इति ज्ञानमनुमितिरुत्पद्यते । तदेतत्स्वार्थानुमानम् ॥

(न्यायबो०) स्वार्थानुमानं नाम न्यायाप्रयोज्यानुमानम्॥

(पदकृ०) स्वार्थमिति ॥ स्वस्यार्थः प्रयोजनं यस्मात्त, त्स्वार्थमिति समासः। स्वप्रयोजनं च स्वस्यानुमेयप्रतिपत्तिः॥ एवं 'परार्थम्' इत्यस्यापि। अयमिति ॥ व्याप्तिवलेन लीनमर्थं गमयति, इति लिङ्गम्। तच्च धूमादिः । तस्य परामर्शी ज्ञानविशेष इत्यर्थः ॥ तस्मादिति ॥ लिङ्गपरामर्शादित्यर्थः॥ स्वार्थमुपसंहरति–तदेतदिति ॥ यस्मादिदं स्वप्रतिपत्ति हेतुः तस्मादेतत्स्वार्थानुमानमित्यर्थः ॥

यत्तु स्वयं धूमादाग्निमनुमाय परप्रतिपत्यर्थं पञ्चावयववाक्यं प्रयुंक्तेतन्परार्थानुमानम् यथा 'पर्वतो अग्निमान्, धूमवत्त्वात्, यो यो धूमवान् स सोग्निमान् यथा महानसम्, तथा चायम्, तस्मात्तथा, इति। अनेन प्रतिपादिताल्लिंगात्परोऽप्यग्निं तप्रीपाद्यते ॥

(न्यायबो०) न्यायप्रयोज्या(१) नुमानं परार्थानुमानम्

१ प्रयोज्यत्वंच साक्षात्परम्परयावाजन्यत्वमिति बोध्यम् ॥

न्यायत्वं च प्रतिज्ञादिपञ्चकसमुदायत्वम्(१) ॥ अवयवत्वं प्रतिज्ञाद्यन्यतमत्वम् ॥

(पदकृ०) क्रमप्राप्तं परार्थानुमानमाह—यदिति ॥ 'यत् पञ्चावयववाक्यं प्रयुज्यते, तत् परार्थानुमानम्' इति सम्बन्धः ॥ पञ्चावयवेति ॥ अथ अवयवत्वं नाम द्रव्यसमवायिकारणत्वम्, 'प्रतिज्ञादिषु तदसम्भवात्कथमेतेऽवयवाः स्युः' इति चेत् ॥ 'अनुमानवाक्यैकदेशत्वात्तु, अवयवाः' इत्युपचर्यन्ते इति गृहाण॥ नन्वेवमपि पञ्चावयववाक्यस्यानुमानत्वमेव न विचारसहम् । तस्य लिङ्गपरामर्शत्वाभावात् ॥ इति चेत् ॥ मैवम् । लिङ्गपरामर्शप्रयोजक (२) लिङ्गप्रतिपादकत्वेन 'अनुमानम्' इत्युपचार(३) मात्रत्वात् ॥ तदुदाहरति—यथेति ॥ तथा चायमिति ॥ अयं च पर्वतः तथा वह्निव्याप्यधूमवान्' इत्यर्थः ॥ तस्मात्तथेति ॥ वह्निव्याप्यधूमवत्वात् वह्निमान्' इत्यर्थः ॥ अनेनेति । 'अनेन पञ्चावयववाक[illegible] ॥

प्रतिज्ञाहेतूदाहरणोपनयनिगमनानि पञ्चावयवाः ॥ 'पर्वतोऽग्निमान्' इति प्रतिज्ञा, 'धूमवत्त्वात्' इति हेतुः, 'यो यो धूमवान् ससोऽग्निमान्'—इत्युदाहरणम्, 'तथा चायम्' इत्युपनयः, 'तस्मात्तथा इति निगमनम्॥

---

१ प्रतिज्ञाहेत्वोः स्वार्थानुमानेपि सत्वेन तद्वारणाय पञ्चकसमुदायत्वमिति ॥

२ प्रयोजकत्वञ्चसाक्षात्परम्परयावाकारणत्वमितिवोध्यम् ॥

३ उपचारोनामामुख्य व्यवहार इति यावत् ॥

(पदकृ०) ननु 'पञ्चावयववाक्यम्' इत्यत्र के ते पंचावयवाः, अतस्तान्दर्शयति–प्रतिज्ञेति ॥ प्रतिज्ञाद्यन्यतमत्वम् अवयवत्वम् ॥ साध्यविशिष्टपक्षबोधकवचनं प्रतिज्ञा । पंचम्यन्तं तृतीयान्तं वा लिङ्गवचनं हेतुः ॥ व्याप्तिप्रतिपादकदृष्टान्तवचनम् उदाहरणम् । उदाहृतव्याप्तिविशिष्टत्वेन हेतोः पक्षधर्मताप्रतिपादकं वचनम् उपनयः । पक्षे साध्यस्याबाधितत्वप्रतिपादकवचनं निगमनम् ॥ इदमेव लक्षणं हृदि निधाय प्रतिज्ञादीन् विशिष्य दर्शयति–पर्वतो वन्हिमानित्यादिना ॥

**स्वार्थानुमितिपरार्थानुमित्योर्लिङ्गपरा[१]मर्श एव करणम् । तस्माल्लिङ्गपरा(२)मर्शोऽनुमानम् ॥**

(पदकृ०) लिङ्गेति ॥ ज्ञायमानं लिङ्गमनुमितिकारणम्' इति वृद्धोक्तं न युक्तम् । 'इयं यज्ञशाल [illegible]ती अतीतधूमात्' इत्यादौ लिङ्गाभावेऽप्यनुमितिदर्शनात्–इत्यभिप्रायवान् 'लिङ्गपरामर्श एव करणम्' इत्याचष्टे–'लिङ्गपरामर्श एव इति । अनुमानमुपसंहरति–तस्मादिति ॥ अनुमितिकरणत्वादित्यर्थः ॥ 'अयमेव (३) तृतीयज्ञानम्' इत्युच्यते । तथाहि—महानसादौ धूमाग्न्योर्व्याप्तौ गृह्यमाणायां यद्धूमज्ञानं तदादिमम्, पक्षे यद्धूम-

---

१ लिङ्ग परामर्श तत्कारण व्याप्ति ज्ञानमेवानुमिति करणमित्यर्थः॥

२ लिंग परामर्श तत्कारणी भूत ज्ञानमनुमानामित्यर्थः ॥

३ लिङ्ग परामर्श एवेत्यर्थः ॥

ज्ञानं तद्द्वितीयम्, अत्रैव(१) वह्निव्याप्यत्वेन यद्धूमज्ञानं तत्तृतीयम्, अयमेव लिङ्गपरामर्श इत्युच्यते ॥ अनुमानमिति ॥ 'व्यापारवत्कारणं करणम्' इति मते 'व्याप्तिज्ञानमेवानुमानम्, लिङ्गपरामर्शो व्यापारः इत्यवसेयम्(२) ॥

लिङ्गं त्रिविधम्—अन्वयव्यतिरेकि केवलान्वयि केवलव्यतिरेकि चेति ॥ अन्वयेन व्यतिरेकेण च व्याप्तिमदन्वयव्यतिरेकि ॥ यथा वन्हौ साध्ये धूमवत्त्वम्। 'यत्र धूमस्तत्राग्निः, यथा महानसम्' इत्यन्वयव्याप्तिः 'यत्र वन्हिर्नास्ति तत्र धूमोपि नास्ति, यथा ह्रदः' इति व्यतिरेकव्याप्तिः ॥

(न्यायबो०) अन्वयेनेति ॥ व्यापकसमानाधिकरण्यरूपव्याप्तिमानित्यर्थः ॥ व्यतिरेकेणेति ॥ व्यतिरेको नामाभावः । तथा च साध्याभावहेत्वभावयोर्व्यतिरेकव्याप्तिः । इयं (त्थं) च 'यत्र यत्रवह्न्यभावस्तत्र तत्र धूमाभावः' इति यत्र पदवीप्सया वह्न्यभाववति यावति धूमाभावग्रहणे यावत्पदस्य व्यापकपरतया धूमाभावे वह्न्यभावव्यापकत्वं लब्धम् ॥ एवं च वह्न्यभाव निष्ठव्याप्तेः स्वा(३) श्रयीभू-

---

१ परामर्शएवेत्यर्थः

२ फलायोग व्यवच्छिन्नं कारणं करणमितिनि मतंतूमुलोक्त रीत्या परामर्शस्यापि करणत्वमस्तु इति भावः ॥

३ स्वं वन्ह्यभाव निष्टव्याप्तिः ॥

तद्वह्न्यभावव्यापकीभूताभावप्रतियोगित्वसम्बन्धेन धूमनिष्ठतया गृहीतव्यतिरेकव्याप्तिमत्त्वेन व्यतिरेकित्वेन, धूमव्यापकवह्निसामानाधिकरण्यरूपान्वयव्याप्तिमत्त्वेनान्वयित्वेन च गृह्यते(१)॥ व्यतिरेकपरामर्शस्तु वह्न्य(२)भावव्यापकीभूताभावप्रतियोगिधूमवान् पर्वतः, इत्याकारकः॥

(पदकृ०) अन्वयव्यतिरेकिणो लक्षणमाह-अन्वयेनेति॥ तृतीयायः प्रयोज्यत्वमर्थः। साध्यसाधनयोः साहचर्यमन्वयः, तदभावयोः साहचर्यं व्यतिरेकः॥ तथा च 'अन्वयप्रयोज्यव्याप्तिमद् व्यतिरेकप्रयोज्यव्याप्तिमद् अन्वयव्यतिरेकि' इत्यर्थः॥ केवलव्यतिरेकिव्याप्त्यतिव्याप्तिवारणाय 'अन्वयेन' इति। केवलान्वयिनि व्यभिचारवारणाय 'व्यतिरेकेण' इति॥ तथा च अन्वयव्याप्तिरुपदर्शितैव। व्यतिरेकव्याप्तिश्च 'साध्याभाव'(३) व्यापकीभूताभावप्रतियोगित्वम्' इत्यर्थः॥ तदुक्तम्--

"व्याप्यव्यापकभावो हि भावयोर्यादृगिष्यते। तयोरभावयोस्तस्माद्विपरीतः प्रतीयते
अन्वये साधनं व्याप्यं साध्यं व्यापकमिष्यते। साध्याभावोन्यथा व्याप्यो व्यापकः साधनात्ययः(४)" इति

---

१ व्याप्तिर्गृह्यते इत्यर्थः॥

२ वन्ह्यभावस्य व्यापकीभूतोयोऽभावोधूमाभावस्तत्प्रतियोगीयोधूमस्तद्वान् पर्वत इत्यर्थः॥

३ वह्निमान् धूमादित्यादौ वह्निरूपसाध्याभावस्य व्यापकीभूतोयोऽभावो धूमाभावस्तत्प्रतियोगित्वं धूमेइति लक्षण समन्वयः॥

४ साधनाभावइत्यर्थः॥

अन्वयमात्रव्याप्तिकं केवलान्वयि ॥ यथा-'घटो ऽभिधेयः प्रमेयत्वात् पटवत्' इति। अत्र प्रमेयत्वाभिधेयत्वयोर्व्यतिरेकव्याप्तिर्नास्ति सर्वस्यापि प्रमेयत्वादभिधेयत्वाच्च ॥

(न्यायबो०) केवलान्वयिनोलक्षणमाह अन्वयेति व्यतिरेकव्याप्तिशून्यत्वे सति अन्वयव्याप्तिमत्त्वं केवलान्वयित्वम्॥ साध्ये केवलान्वयित्वम् अत्यन्ताभावाप्रतियोगित्वम्। तथाच 'अभावाप्रतियोगिसाध्यव्यापकत्वं' केवलान्वयिहेतोर्लक्षणम्॥ एतल्लक्षणं हेतोर्व्यतिरेकित्वे न संगच्छते। साध्ये केवलान्वयित्वादेव व्यतिरेकव्याप्ते रभावात्' अन्वयमात्र व्याप्तिकं केवलान्वयि' इतिमूलकारोक्तलक्षणमुपपन्नम्॥ अत्यन्ताभावाप्रतियोगित्वं केवलान्वयित्वम् ॥ नच 'एवं संयोगाभावे कालाभावे चाव्याप्तिः' इति वाच्यम् स्व (१) विरोधिवृत्तिमदत्यन्ताभावाप्रतियोगित्वस्य तदर्थत्वात् ॥ 'एक जातीय(२) सम्बन्धेन सर्वत्र विद्यमानत्वं केवलान्वयित्वम्' इति नव्याः ॥

---

१ स्वविरोधीति ।[illegible]वृत्तिरित्यर्थः ॥ संयोगतदभावयोर्विरोधित्वं नास्ति = का[illegible]वस्य च वृतिमत्वं नास्त्यतः स्वविरोधिवृतिमदिति ॥ स्वविरोधी[illegible] वृतिमदत्यन्ताभावस्तद प्रतियोगित्वमित्यर्थः ॥ स्वपदेन घटाभावः तस्य विरोधीयो वृतिमदत्यन्ताभावो घटाभावाभावः तत्प्रति योगित्वं घटाभावे ऽप्रति योगित्वञ्च वाच्यत्वादौ इति लक्षणसमन्वयः ॥

२ एक जातीयत्वञ्च स्वरूप सम्बन्ध विशेषः ॥

(पदकृ०) केवलान्वयिनो लक्षणमाह-अन्वयेति ॥ अन्वयेनैव व्याप्तिर्यस्मिन्स तथा ॥ प्रमेयत्वाभिधेयत्वयोर्व्यतिरेकव्याप्तिं निराकरोति—अत्रेति ॥ 'अभिधेयत्वसाधकानुमाने' इत्यर्थः ॥ ननु कुतस्तन्निषेधः, अतस्तत्र हेतु माह-सर्वस्येति ॥ पदार्थमात्रस्येत्यर्थः ॥ तथा च सकले पदाभिधेयत्वस्येश्वरप्रमाविषयत्वस्य चात्यन्ताभावाप्रतियोगित्वरूपकेवलान्वयित्वेन तदभावाप्रसिद्ध्या तद्घटितव्यतिरेकव्याप्तिर्न सम्भवत्येवेति भावः ॥

**व्यतिरेकमात्रव्याप्तिकं केवलव्यतिरेकि ॥ यथा-पृथिवीतरेभ्यो भिद्यते गन्धवत्त्वात् । यदितरेभ्यो न भिद्यते न तद्गन्धवत् यथा जलम् । न चेयं तथा । तस्मान्न तथेति । अत्र 'यद्गन्धवत्तदितरेभ्योऽपि भिन्नम्' इत्यन्वयदृष्टान्तो नास्ति, पृथिवीमात्रस्य पक्षत्वात् ॥**

(न्यायबो०) अन्वयव्याप्ति शून्यत्वे सति व्यतिरेकव्याप्तिमत्वं केवलव्यतिरेकित्वम् ॥ यथा पृथिवीति । अत्र "पृथिवीत्वावच्छिन्नं पक्षः, पृथिवीतरजलाद्यष्टभेद साध्यः, गन्धवत्वं हेतुः । अत्र 'यद्[illegible]वत् तदितरभेदवत्' इत्यन्वयदृष्टान्ताभावात् ग[illegible]कतरभेदसामानाधिकरण्यरूपान्वयव्याप्तिग्रहासम्भवः । किन्तु 'यत्र यत्रेतरभेदाभावस्तत्र तत्र गन्धाभावः यथा जलादिकम्' इति व्यतिरेकदृष्टान्तभूतजलादावितरभेदाभावरूपसाध्याभावव्यापकता गन्धाभावे दृश्यते। इममेवार्थं मनसि निधाय 'यन्नेतरेभ्यो भिद्यतेनतद्गन्धवत् यथाजलम्' इतिग्रन्थेनमूलकृद्व्यतिरेकव्याप्तिमेव प्रदर्शितवान् ॥ एवं व्यतिरेकव्याप्[illegible]

नन्तरम् 'इतरभेदाभावव्यापकीभूताभावप्रतियोगिगन्धवती पृथिवी' इत्याकारकव्यतिरेकिपरामर्शात् 'पृथिवीत्वावच्छिन्नोद्देश्यतानिरूपितेतरभेदत्वावच्छिन्नविधेयताका पृथिवी इतरभेदवती' इत्याकारानुमितिर्जायते' इति तत्त्वम् ॥ यथा श्रुतमूलार्थस्तु—यथाजलमिति ॥ जलमितरभेदाभाववत् = 'इतरभेदाभावव्यापकगन्धभाववच्च' इत्येवं प्रकारेण गन्धाभावनिरूपिता व्याप्यता इतरभेदाभावे गृह्यते' इत्यर्थः॥ नचेयं तथेति । इयं पृथ्वी, तथा इतरभेदाभावव्यापकगन्धाभाववतीन, किंतु तदभाववतीगन्धवती इत्यर्थः ॥ तस्मान्न तथेति ॥ तच्छब्देन गन्धाभावाभावरूपस्य गन्धस्य परामर्शेन तस्मात्' इति पञ्चम्यन्तात् 'गन्धाभावाभाववत्त्वात् इत्यर्थोपलब्धेः, तथा इतरभेदभाववती। 'न' इत्यस्याभावः, तथा च 'इतरभेदाभावाभाववती = इतरभेदवती' इत्यर्थः ॥

(पदकृ०)केवलव्यतिरेकिणो लक्षणमाह-व्यतिरेकेति॥ व्यतिरेकेणैव व्याप्तिर्यस्मिंस्तत्तथा ॥ अन्वयव्यतिरेकिणि अति व्याप्तिवारणाय मात्रपदम्' नचेयं तथेति ॥ 'इयं पृथिवी न तथा न गन्धाभाववती' इत्यर्थः ॥ तस्मान्न तथेति ॥ [गन्धाभाववत्त्वाभावादितरभेदाभाववती न, इत्यर्थः ननु [अ]त्र [कि]मिति नान्वयव्याप्तिः' इत्याशङ्क्य परिहरति-अत्रे- [ति] ॥ 'इतरभेदसाधकानुमाने' इत्यर्थः॥ इदमुपलक्षणम्-"जी[व]च्छरीरं सात्मकं, प्राणादि(१) मत्त्वात् यन्नैवं तन्नैवं य[था घटः]"

१ "[illegible] 'प्रमाणम्' इति व्यवहर्तव्यम्, [illegible] प्रति[illegible]नैवं यथा प्रत्यक्षाभासः" "वि[illegible]भवात्, इति व्यवहर्तव्यम् शब्दवत्त्वात्'

२ तथा [illegible] पक्ष [illegible] साध्य [illegible] पक्ष व्यव[illegible] इति फलित[illegible]याणि ग्राह्याणि ।

इत्यादिकमपि केवलव्यतिरेकि इति द्रष्टव्यम् ।

**संदिग्धसाध्यवान् पक्षः । यथा-धूमवत्त्वे हेतौ पर्वतः ।**

(न्यायबो०) संदिग्धसाध्येति ॥ साध्यप्रकारकसंदेहविशेष्यत्वम् पक्षत्वम् ॥ एतच्च 'अनुमितेः पूर्वसाध्यसंदेहो नियमेन जायते'इत्यभिप्रायेण लक्षणं प्राचीनैः कृतम् ॥ गगनविशेष्यकमघेप्रकारकसंदेहाभावदशायामपि गृहमध्यस्थपुरुषस्य घनगर्जितश्रवणेन 'गगनं मेघवत्' इत्याकारानुमिति र्जायते गगनत्वावच्छिन्नोद्देश्यतानिरूपितमेघत्वावच्छिन्नविधेयताकानुमितिदर्शनात् प्राचीनमतं विहाय नवीनैः "अनुमित्युद्देश्यत्वं(१) पक्षत्वम्' इति स्थिरीकृतम् ॥

(पदकृ०) अथ पृथिवीमात्रस्य पक्षत्वात्' इत्यत्र किं नाम पक्षता, तांनिर्वक्ति-संदिग्धेति ॥ सपक्षवारणाय संदिग्धेति ॥

**निश्चितसाध्यवान् सपक्षः । यथा तत्रैव महानसम् ॥**

(न्यायबो०) निश्चितसाध्येति ॥ साध्यप्रकारकनिश्चयविशेष्यत्वं सपक्षत्वम् ॥ निश्चयश्च, महानसं वन्हिमद्-इत्याकारकः ॥ यत्रे-

(पदकृ०) निश्चितेति ॥ पक्षे अतिव्याप्तिवारणम् इति श्चितेति । तत्रेति 'धूमवत्त्वे हेतौ' व्या[illegible]पसाध्याभाव-[illegible]भावाभ[illegible]ासि निधाय 'य-

१ तच्च सिषाधयिषाविरह विशिष्टलम्[illegible]तिग्रन्थेनमूलकृबोध्यम् ॥ [illegible]वं व्यतिरेकव्या[illegible]

निश्चितसाध्याभाववान् विपक्षः । यथा तत्रैव ह्रदः ॥

( न्यायबो० ) निश्चितसाध्याभाववेति ॥ साध्याभाव-प्रकारकनिश्चयविशेष्यत्वं विपक्षत्वम् ॥ निश्चयश्च 'ह्रदो व-ह्न्यभाववान् इत्याकारकः ॥

(पदकृ०) निश्चितेति ॥ सपक्षे अतिव्याप्तिवारणाय 'साध्याभाव' इति ॥ पक्षे अतिव्याप्तिवारणाय 'निश्चित' इति । तत्रैवेति धूमवत्त्व एव ॥

सव्यभिचारविरुद्धसत्प्रतिपक्षासिद्धबाधितर-ताः पञ्च हेत्वाभासाः ॥ ...द्धत्वात्'

(न्यायबो०) एवं सद्धेतून्निरूप्य हेत्वाभ...यो ऽनित्येभ्यो

सव्यभिचारेति ॥ हेतुवदाभासन्त इति हे...

इत्यर्थः । ...

(न्यायबो०) असाधारण इति ॥ सर्वसपक्षव्यावृत्तत्वं ...श्चितसाध्यवदवृत्तित्वम् । साध्यवदवृत्तित्वं च साध्या-...मानाधिकरण्यम् ॥ हेतौ साध्यासामानाधिकरण्ये निश्चिते ...यसामानाधिकरण्यरूपव्याप्तिज्ञानप्रतिबन्धः फलम् ॥

(पदकृ०) पक्षमात्रेति ॥ सर्वे ये सपक्षा विपक्षास्तेभ्यो

---

१ अनेन साधारणेनापि साध्य सामानाधिकरण्य रूपोव्या-ग्रहः प्रतिबध्यते ॥

२ तथाच पक्ष सपक्ष वृतित्व विशिष्ट साध्याभाव वद्वृतिः पक्ष व्यव इति फलितो ऽर्थः ॥

धितविषयत्वम्, असत्प्रतिपक्षत्वं चेति। अबाधितः साध्यरूप-
विषयो यस्य तत्तथोक्तम्, तस्य भावस्तत्त्वम्, एवं साध्याभा-
वसाधकं हेत्वन्तरं यस्य स 'सत्प्रतिपक्ष' इत्युच्यते, स नास्ति
यस्य सः असत्प्रतिपक्षः, 'तस्य भावस्तत्त्वम्' (इति बोध्यम्)
केवलान्वयि तु चतुरूपोपपन्नमेव स्वसाध्यं साधयितुं क्षमते।
तस्य विपक्षविपर्ययेण तद्व्यावृत्तिविपर्ययात्॥ केवलव्यति-
रेक्यपि तथा तस्य सपक्षविपर्ययेण तत्सत्त्वविपर्ययात्" इति॥
प्रदर्शितरूपाणां मध्ये कतिपयरूपोपपन्नत्वात्, 'हेतुवदा-
पुरु...ते' इति हेत्वाभासाः । तत्त्वंच अनुमितितत्करणान्य-
जायते ...धकयथार्थज्ञानविषयत्वम्॥ 'बाधस्थले वन्हिरनु-
धेयताकानु...प्रतिबन्धकं यज्ज्ञानम् 'उष्णत्ववद्द्ह्नावनुष्ण-
मित्युद्देश्यत्वं(१...त्वम् इत्याकारकम्, तद्विषयत्वस्य विषयिता-

(पदकृ०) ...पहेत्वाभासे सत्वाल्लक्षणसमन्वयः (१)॥
नाम पक्षता, तांनिवा... ...नुमिति-
दिग्धेति॥

**निश्चितसाध्यवान् सपक्षः । यथा तत्रैव महानसम्॥**

(न्यायबो०) निश्चितसाध्येति॥ साध्यप्रकारकनिश्च-
यविशेष्यत्वं सपक्षत्वम्॥ निश्चयश्च, महानसं वन्हिमद्-
इत्याकारकः॥ यत्रे-

(पदकृ०) निश्चितेति॥ पक्षे अतिव्याप्तिरुक्तम् इति
श्चितेति। तत्रेति 'धूमवत्त्वे हेतौ' व्या...रूपसाध्याभाव-
...भावाम...सि निधाय 'य-

१ तच्च सिषाधयिषाविरह विशिष्टम... तिग्रन्थेनमूलकृ-
बोध्यम्॥ ...वं व्यतिरेकव्याप्ति

साध्याभाववद्वृत्तिः साधा(१)रणोऽनैकान्तिकः। यथा पर्वतोऽग्निमान् प्रमेयत्वात्' इति प्रमेयत्वस्य वन्ह्यभाववति ह्रदे विद्यमानत्वात् ॥

(पदकृ०) तत्रेति ॥ साधारणादित्रयमध्ये' इत्यर्थः अथ 'विरुद्धेऽतिप्रसक्तिः' इति मास्मद्दूष्यः। सपक्षवृत्तित्वस्यापि निवेशात् ॥ अथैवमपि स्वरूपासिद्ध दूषणं जागर्ति, इति मा वह गर्वम्। पक्ष(२) वृत्तित्वस्यापि तथात्वात्।

सर्वसपक्षविपक्षव्यावृत्तः पक्षमात्रवृत्तिरसाधारणः। यथा 'शब्दो नित्यः शब्दत्वात्' इति। शब्दत्वं सर्वेभ्यो नित्येभ्योऽनित्येभ्यो व्यावृत्तं शब्दमात्रवृत्ति ॥

(न्यायबो०) असाधारण इति ॥ सर्वसपक्षव्यावृत्तत्वं श्चितसाध्यवदवृत्तित्वम्। साध्यवदवृत्तित्वं च साध्यानाधिकरण्यम् ॥ हेतौसाध्यासामानाधिकरण्ये निश्चिते ध्यसामानाधिकरण्यरूपव्याप्तिज्ञानप्रतिबन्धः फलम् ॥

(पदकृ०) पक्षमात्रेति ॥ सर्वे ये सपक्षा विपक्षास्तेभ्यो

---

१ अनेन साधारणेनापि साध्य सामानाधिकरण्य रूपोव्याग्रहः प्रतिबध्यते ॥

२ तथाच पक्ष सपक्ष वृतित्व विशिष्ट साध्याभाव वद्वृतिः पक्ष व्यव इति फलितो ऽर्थः ॥

व्यावर्तत इति व्यावृत्तः ॥ केवलव्यतिरेकिवारणाय 'त-
द्भिन्नः' (१) इत्यपि देयम् ॥

**अन्वयव्यतिरेकदृष्टान्तरहितोऽनुपसंहारी (२)। यथा-'सर्वमनित्यं प्रमेयत्वात्' इति । अत्र सर्वस्यापि पक्षत्वाद्दृष्टान्तो नास्ति ॥**

(न्यायबो०) अनुपसंहारिणं लक्षयति-अन्वयेति ॥ उ-
भयत्र दृष्टान्ताभावादन्वयव्याप्तिज्ञानव्यतिरेकव्याप्तिज्ञानो-
भयसामग्री नास्तीत्यर्थः पक्षातिरिक्तापसिद्धेरित्यर्थः ॥

(पदकृ०) अन्वयेति ॥ केवलान्वयिन्यतिव्याप्तिवार-
णाय 'अन्वय' इति । केवलव्यतिरेकिण्यतिव्याप्तिवारणाय
'व्यतिरेक इति ॥ अत्रेति ॥ उपदर्शितानुमाने' इत्यर्थः ॥

**साध्याभावव्याप्तो हेतुर्विरुद्धः। यथा 'शब्दो नित्यः कृतकत्वात्' इति कृतकत्वं हि नित्यत्वाभावेनानित्यत्वेन व्याप्तम् ॥** [illegible]त्रैव

(न्यायबो०) विरुद्धं लक्षयति-साध्याभावव्याप्त [illegible]
तथा च पक्षविशेष्यकसाध्याभावव्याप्यहेतुप्रकारकज्ञा[illegible]निश्च
पक्षविशेष्यकसाध्यप्रकारकानुमितिप्रतिबन्धः फलम् । [illegible]हम्ध-
सत्प्रतिपक्षेऽपि ॥ विरुद्धसत्प्रतिपक्षयोर्विशेषस्तु-विरुद्धहे[illegible] यत्रे-
रेकत्वेनसत्प्रतिपक्षहेतोर्द्वित्वेन च ज्ञातव्यः 'सत्प्रतिपक्ष इति
[illegible]ाव-
१ तथाचान्वय व्यतिरेक व्याप्ति शून्यत्वेसति पक्षमात्र 'य-
त्तिर साधारण इति फलितोऽर्थः ॥ [illegible]मूलकृ-

९ अनेन च व्यतिरेकव्याप्तिग्रहः प्रतिवध्यते इति व्याप्ति

हेतू, विरुद्ध एको हेतुः' इति यावत् ॥ साध्याभावसाधक हेतुः, साध्यसाधकत्वेनोपन्यस्तः इत्यसामर्थ्यसूचनमपि भवति ॥

(पदकृ०) विरुद्धं लक्षयति-साध्येति ॥ सद्धेतुवारणाय 'साध्याभावव्याप्तः' इति । सत्प्रतिपक्षवारणाय 'सत्प्रति-पक्षभिन्नः' इत्यपि ज्ञेयम् ॥ कृतेति ॥ कार्यत्वादित्यर्थः ॥ कृ-तकत्वमिति ॥ अनित्यत्वेनव्याप्तमिति ॥ 'यद्यत्कृतकं तत्त-दनित्यम्' इति व्याप्तेर्भवत्येव तथेति भावः ॥

**साध्याभावसाधकं हेत्वन्तरं यस्य स सत्प्र-तिपक्षः(१) । यथा 'शब्दो नित्यः श्रावणत्वा-च्छब्दत्ववत्,शब्दोऽनित्यः कार्यत्वात् घटवत्'॥**

(पदकृ०) सत्प्रतिपक्षं लक्षयति-साध्येति ॥ 'यस्य हेतोः साध्याभावसाधकं साध्याभावस्यानुमापकं हेत्वन्तरं प्रतिपक्षो हेतुर्विद्यते, स हेतुः सत्प्रतिपक्षः' इत्यर्थः ॥ अय-[मे]व 'प्रकरणसमः' इत्युच्यते ॥ विरुद्धवारणाय 'हेत्वन्तरं [य]स्य' इति ॥ वन्ह्यादिवारणाय(२) 'साध्याभाव-' इति ॥

**असिद्धस्त्रिविधः-आश्रयासिद्धः स्वरूपासि-द्धो व्याप्यत्वासिद्धश्चेति ॥**

---

१ सत्प्रतिपक्षस्य विरोधि ज्ञान सामग्रीत्वेन साक्षादनुमिति विरोधित्वमिति बोध्यम् ॥

२ साधकं हेत्वन्तरं यस्यस सत्प्रतिपक्ष इत्युक्ते वन्ह्यादि साध्यसाधकं हेत्वन्तरं धूमादि तथाच वन्ह्यादि साध्ये एव सत्प्रति पक्ष व्यवहारः स्यादिति भावः ॥

(पदकृ०) असिद्धं विभजते असिद्ध इति ॥ आश्रयासिद्धाद्यन्यतमत्वमसिद्धम् ॥

**आश्रयासिद्धो यथा—गगनारविन्दं सुरभि अरविन्दत्वात् सरोजारविन्दवत्। अत्र गगनारविन्दमाश्रयः, सच नास्त्येव ॥**

(न्यायबो०) आश्रयासिद्ध इति॥ (आश्रयासिद्धिर्नाम) पक्षतावच्छेदकविशिष्टपक्षाप्रसिद्धि(१) । (तथाच)-गगनीयत्व विशिष्टपक्षसिद्धेः सौरभ्यानुमितिर्न भवति ॥

(पदकृ०) आश्रयासिद्धत्वं च पक्षतावच्छेदकाभाववत्पक्षकत्वम् ॥ भवति हि अरविन्दे गगनीयत्वरूपपक्षतावच्छेदकाभाववत्त्वम्, अरविन्दरूपपक्षे गगनीयत्वविरहात् ॥ ननु कथमरविन्दे गगनीयत्वविरहोऽत आह-अत्रेति ॥ उपदर्शितानुमान इत्यर्थः ॥

**स्वरूपासिद्धो यथा-शब्दो गुणः चाक्षुषत्वात् रूपवत् । अत्र चाक्षुषत्वं शब्दे नास्ति शब्दस्य श्रावणत्वात् ॥**

(न्यायबो०) स्वरूपासिद्धर्नाम पक्षे हेत्वभावः । तथ च हेत्वभावविशिष्टपक्षज्ञानात् पक्षविशेष्यकहेतुप्रकारकपरामर्शानुपपत्त्या परामर्शप्रतिबन्धः फलम् ॥

(पदकृ०) पक्षे हेत्वभावः स्वरूपासिद्धिः॥ सद्धेत्वभावे

---

१ आश्रयासिद्धेश्च पक्षधर्मताज्ञान द्वारा परामर्श प्रतिबन्धः फलमिति बोध्यम् ॥

ऽतिव्य.प्तिवारणाय 'पेक्ष इति । घटाद्यभाववारणाय हेतु' इति ॥ सोऽयं स्वरूपासिद्धः शुद्धासिद्धः-भागा(१)सिद्ध-विशेषणासिद्ध-विशेष्यासिद्ध-भेदेन चतुर्विधः ॥ तत्राद्यस्तूपदर्शित एव ॥ द्वितीयो यथा-'उद्भूतरूपादिचतुष्टयं गुणः रूपत्वात्' इत्यत्र रूपत्वहेतोः पक्षैकदेशावृत्तित्वेन भागे स्वरूपासिद्धत्वम् ॥ तृतीयो यथा-'वायुः प्रत्यक्षः रूपवत्त्वे सति स्पर्शवत्त्वात्' इत्यत्र रूपत्वविशेषणस्य वायावृत्तेस्तद्विशिष्टस्पर्शवत्त्वस्यापि तथात्वेन तस्य स्वरूपासिद्धत्वं निर्वहति, विशेषणाभावे विशिष्टस्याप्यभावात् ॥ तुरीयो यथा-अत्रैव विशेषण विशेष्यवैपरीत्येन (२) हेतुः, तस्य स्वरूपासिद्धत्वं विशेष्याभाव प्रयुक्तविशिष्टाभावात्' इति बोध्यम् ॥

**सोपाधिको हेतुर्व्याप्यत्वासिद्धः ॥ साध्यव्यापकत्वे सति साधनाव्यापकत्वम् उपाधिः ॥ साध्यसमानाधिकरणात्यन्ताभावप्रतियोगित्व साध्यव्यापकत्वम् ॥ साधनवन्निष्ठात्यन्ताभाव-**

---

१ दुष्ट लक्षणमपि हेत्वाभास एव ॥ तथाहि ॥ अव्याप्त लक्षणं भागासिद्धे ऽन्तर्भवति । असम्भवग्रस्तं च स्वरूपासिद्धे ऽन्तर्भवति ॥ अति प्रसक्त लक्षणस्य व्याप्यत्वासिद्धेरन्तर्भावः ॥ सिद्धसाधनस्यचाश्रयासिद्धेरन्तर्भावः ॥ इत्येवं रूपेण बोध्यम् ॥

२ वायुः प्रत्यक्षः स्पर्शवत्वेसति रूपवत्वात् ॥ इत्यत्ररूपवत्व रूप विशेष्यस्य वायावभावेन तद्विशिष्ट स्पर्शवत्व रूप विशेषणस्यापि तथात्वेन तस्य स्वरूपासिद्धत्वमक्षतमेवेति ॥

प्रतियोगित्वं साधनाव्यापकत्वम् ॥ पर्वतो धूमवान् वह्निमत्त्वात् 'इत्यत्र' आर्द्रेन्धनसंयोग उपाधिः । 'यत्र धूमः' तत्रार्द्रेन्धनसंयोगः' इति साध्यव्यापकता । 'यत्र वन्हिः' तत्रार्द्रेन्धन संयोगोनास्ति, अयोगोलक आर्द्रेन्धनभावात्' इति साधनाव्यापकता । एवं साध्यव्यापकत्वे सति साधनाव्यापकत्वादार्द्रेन्धनसंयोग उपाधिः । सोपाधिकत्वाद्वह्निमत्त्वं व्याप्यत्वासिद्धम् ॥

(न्यायबो०) व्याप्यत्वासिद्धमिति ॥ प्रकृते धूमव्यापकत्वमार्द्रेन्धनसंयोगे गृहीतं चेत्, धूमे आर्द्रेन्धनसंयोगव्याप्यत्वं गृहीतम् । एवं वह्नेरव्यापकत्वमार्द्रेन्धनसंयोगे गृहीतं चेद; वह्नौतदव्याप्यत्वं गृहीतम्, तदेव व्यभिचारीत्वं ॥ तथा चोपाधि व्यभिचारित्वं साधने गृहीतं चेत् उपाधिभूतार्द्रेन्धनसंयोग व्याप्यधूमव्यभिचारित्वं गृहीतमेव ॥ अनुमानप्रकारश्च पूर्वानुमानहेतु पक्षीकृत्य 'वह्निर्धूम[illegible]भिचारीधूमव्यापकार्द्रेन्धन संयोगव्यभिचारित्वात्घटत्वादिवत् । यो यत्साध्यव्यापकव्यभिचारीसर्वोऽपिसाध्यव्यभिचारी।एवंप्रकारेण प्रकृतानुमानहेतुभूतपक्षेसाध्यव्यभिचारोत्थापकतयादूषकत्वमुपाधेः। तथाच धूमाभाववद्वृत्तित्वरूपधूमव्यभिचारेगृहीतेवह्नौ धूमाभावद्वृत्तित्वरूपव्याप्तिग्रहप्रतिबन्धः फलम् । न च व्याप्यत्वा

राभेद इति वाच्यं धूमाभाव वद्वृतित्वाभावाभाववत्त्वेन व्याप्य-
त्वासिद्धत्वं॥धूमाभाववद्वृतित्वेन व्यभिचारत्वमिति भेदात्॥

(पदकृ०) व्याप्यत्वासिद्धं लक्षयति–'सोपाधिकः' इति॥
ननु 'कोयमुपाधिः' इयत आह–साध्येति॥ 'साधनाव्यापक'
त्वमुपाधिः' इत्युक्ते 'शब्दोऽनित्यः कृतकत्वात्' इत्यत्र 'सामान्य-
वत्त्वे(१) सत्यस्मदादिबाह्येन्द्रियग्रहणार्हत्वम्' उपाधिः स्यात्-
तदर्थं साध्यव्यापकत्वमुक्तम्॥तावत्युक्ते सामान्यवत्वादिना
ऽनित्यत्वसाधने कृतकत्वमुपाधिः स्यात्, तदर्थं साधना-

---

१ नच ध्वंस रूपकार्य्यत्वावच्छेदेन सामान्यवत्वमात्रस्यापि साधनाव्यापकत्वादित्येतावन् मात्रमुपाधिरास्त्विति वाच्यम् यद्यु-पाधि निरूपित व्यापकत्वं हेतौस्यात्तदाहेतुनिरूपिताव्यापकत्व-मुधाधौभवेत् तदेवतुनास्ति तथाहि = व्यापकत्वं हि स्वसमानाधि-करणात्यन्ताभावाप्रतियोगित्वम् स्वपदञ्च सामान्यवत्व रूपोपा-धिपरम् तत्समानाधिकरण वृत्यत्यन्ताभावः गगनाद्यवच्छेदेन कृतकत्वात्यन्ताभावस्तत्प्रतियोगित्वमेव कृतकत्वरूपहेतोरित्यत आह अस्मदादिवाह्येन्द्रियेति = तथाच नित्यानां सामान्यवतां गगना-दीनामस्मदादि वहिरिन्द्रिय ग्रहणानर्हत्वात् सुवचं विशेषणम्॥ योगिनां तत्तदिन्द्रिय योग्य सूक्ष्म पदार्थानामपि भानात्तद्वारण-यास्मदादीति॥ अन्तर्मन इन्द्रियेणात्मनोग्रहणात् तद्वारणाय वाह्येन्द्रियेति = एवंहयस्मादि वाह्येन्द्रिय ग्रहणार्हत्व मात्रस्योपा-धित्वे सामान्याद्यवच्छेदेनोपाधेः सत्वात् = हेतोश्चासत्वात् तत्रापि पूर्वोक्तरीत्या उपाधि निरूपित व्यापकत्वं हेतौनास्तीति सामान्य-वत्व विशिष्ट वाह्येन्द्रिय ग्रहणार्हत्वं फलितमिति भावः॥

व्यापकत्वमुक्तम् ॥ उपाधिभेदमादायासंभववारणाय व्यापकत्वशरीरे ऽप्यत्यन्तपदमादेयम् (१) ॥ साधनभेदमादाय साधनस्योपाधित्ववारणायाव्यापकशरीरेऽप्यत्यन्तपदमावश्यकं देयम् ॥ सोऽयमुपाधिस्त्रिविधः—केवलसाध्यव्यापकः, पक्षधर्मावच्छिन्नसाध्यव्यापकः, साधनावच्छिन्नसाध्यव्यापकश्चेति ॥ तत्राद्योमूले उपदर्शितः ॥ एवं 'क्रत्वन्तर्वर्तिनी हिंसा ऽधर्मजनिका हिंसात्वात् क्रतुवाह्यहिंसावत्' इत्यत्र निषिद्धत्वमुपाधिः । तस्य 'यत्राधर्म जनकत्वम्, तत्र निषिद्धत्वम्' इति साध्यव्यापकता । 'यत्र हिंसात्वम्, तत्र न निषिद्धत्वम्' इति निषिद्धत्वमुपाधिः साधनाव्यापकः, क्रतुहिंसायां निषिद्धत्वस्याभावात् । "न हिंसात्सर्वा भूतानि" इति सामान्यवाक्यतः 'पशुना यजेत' इत्यादिविशेषवाक्यस्य वलीयस्त्वात् । अतो हिंसात्वं नाधर्मजनकत्वे प्रयोजकम्, अपितु 'निषिद्धत्वमेव' इत्यादिकमपि द्रष्टव्यम् ॥ द्वितीयो यथा—'वायुः प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वात्' इत्यत्रोद्भूतरूपवत्वम् उपाधिः । तस्य 'यत्र प्रत्यक्षत्वम्, तत्रोद्भूतरूपवत्त्वम्, इति न केवलसाध्यव्यापकत्वं रूपे व्यभिचारात् किंतु 'द्रव्यलक्षणो यः पक्षधर्मस्तदवच्छिन्नवहिःप्रत्यक्षत्वं यत्र तत्रोद्भूतरूपवत्त्वम्' इति पक्षधर्मावच्छिन्नसाध्यव्यापकत्वमेव । आत्मनि व्यभिचारवारणाय बहिःपदम् । 'यत्र प्रत्यक्षस्पर्शाश्रयत्वम्' तत्र नोद्भूत रूपवत्त्वम्' इति साधनाव्यापकत्वं च । वायावुद्भूतरूपविरहात् ॥ तृतीयो यथा—'प्रागभावो विनाशी जन्यत्वात्' इत्यत्र भावत्वम् उपाधिः । तस्य 'यत्र

१ दत्तमित्यर्थः ॥

विनाशित्वम्, तत्र भावत्वम्' इति न केवलसाध्यव्यापकत्वम्, प्रागभावे भावत्वविरहात्। किंतु 'जन्यत्वरूपसाधनावच्छिन्नविनाशित्वं यत्र, तत्र भावत्वम्' इति साधनावच्छिन्नसाध्यव्यापकत्वमेवास्ति। 'यत्र जन्यत्वम्, तत्र भावत्वम्' इति साधनाव्यापकत्वं च, ध्वंसे भावत्वविरहात्॥ एवं 'स श्यामो मित्रातनयत्वात्' इत्यत्रशाकपाकजन्यत्वमुपाधिः। श्यामत्वस्य नीलघटेऽपि सत्त्वात् न केवलसाध्यव्यापकत्वम्। किंतु साधनावच्छिन्नसाध्यव्यापकत्वमेव। अष्टमे पुत्रे शाकपाक जन्यत्वविरहेण साधनाव्यापकत्वं च" इत्यादिकं द्रष्टव्यम्॥

**यस्य साध्याभावः प्रमाणान्तरेण निश्चितः स बाधितः। यथा 'वह्निरनुष्णो द्रव्यत्वात्' इत्यत्रानुष्णत्वं साध्यम्, तदभावउष्णत्वं स्पर्शेन प्रत्यक्षेण गृह्यते इति बाधितत्वम्॥**

व्याख्यातमनुमानम्

(न्यायबो०) यस्येति॥ यस्य हेतोः। साध्यस्याभावः साध्याभावः स च प्रत्यक्षप्रमाणेन निश्चितः॥ तथा च प्रात्यक्षिकसाध्याभावनिश्चयेनानुमितिप्रतिबन्धः (१) फलम्॥ बाधितसाध्यकत्वाद्बाधितो हेतुरुच्यते॥

(पदकृ०) यस्येति॥ सद्धेतुवारणाय 'प्रमाणान्तरेण' इति। घटादिवारणाय 'साध्य' इति॥

इत्यनुमाननिरूपणम्॥

---

१ बाधस्यग्राह्याभावनिश्चयत्वेन साक्षादनुमिति प्रतिबन्धकत्वं बोध्यम्॥

उपमितिकरणमुपमानम् ॥ संज्ञासंज्ञिसं-न्धज्ञानमुपमितिः । तत्करणं सादृश्यज्ञानम् । तथाहि—कश्चिद्गवयपदार्थमजानन् कुतश्चिदारण्यकपुरुषाद् 'गोसदृशो गवयः' इति श्रुत्वा वनं गतो वाक्यार्थं स्मरन् गोसदृशं पिण्डं पश्यति तदनन्तरं 'गवयशब्दवाच्यो ऽयम्' इत्युपमितिरुत्पद्यते ॥

(न्यायबो०) उपमानं लक्षयति—उपमितीति ॥ उपमितिं लक्षयति संज्ञासंज्ञीति ॥ संज्ञा पदम्, संज्ञ्यर्थः, तयोः संबन्धः शक्तिः । तथा च 'पदपदार्थसंबन्ध (१) ज्ञानमुपमितिः' इत्यर्थः

१ अयम्भावः सादृश्यज्ञान करणत्वेन पदपदार्थयोः सम्बन्ध ज्ञानमुपमितिरिति वाच्यम् ॥ अन्यथा व्याकरणादीनामपि पद पदार्थ सम्बन्ध ग्राहकत्वेन तषामप्युपमानत्वापतिः तज्जन्य शब्द बुद्धे रुपमितित्वापतिश्च पद पदार्थ सम्बन्ध एव शक्तिः तद्ग्राहकत्वञ्च व्याकरणादीनामष्टानामेवाति तन्त्र सिद्धम् ॥ तथाहि शक्ति ग्रहं व्याकरणोपमानकोशाप्तवाक्याद् व्यवहारतश्च ॥ वाक्यस्य शेषाद्विवृतेर्वदन्तिसानिध्यतासिद्ध पदस्य वृद्धा ःते ॥ १ ॥ अस्यार्थश्च धातु प्रकृति प्रत्ययादीनां शक्ति ग्रहो व्याकरणात्॥१॥ उपमानाच्छक्ति ग्रहश्च प्रकृत प्रसक्त एव ॥ २ ॥ एवं कोशादपि स्वर व्ययादि पदानां स्वर्गादि वाचकत्वं गृह्यते ॥ ३ ॥ एवमाप्तोपदेशादपि यथा कोकिलः पिक पदवाच्य इत्यादि शब्दात पिकादि पद शक्ति ग्रहः ॥ ४ ॥ एवं व्यवहारादपि यथा परम

उपमानमतिदेशवाक्यार्थज्ञानम् । अतिदेशवाक्यार्थस्मरणं व्यापारः । 'गोसदृशो गवयपदवाच्यः' इत्याकारकात् गोसदृशत्वावच्छिन्नविशेष्यकगवयपदवाच्यत्वप्रकारकज्ञानं जायते, तदेव करणम् ॥

(पदकृ०) अवसरसंगतिमभिप्रेत्यानुमानानन्तरम् उपमानं निरूपयति--उपमितीति ॥ उपमितेः करणमुपमानमित्यर्थः ॥ कुठारादिवारणाय 'मिति' इति ॥ प्रत्यक्षादिवारणाय 'संबन्ध' इति । संयोगादिवारणाय संज्ञासंज्ञि' इति॥ 'अयं गवयपदवाच्यः' इति । 'अभिप्रेतगवयो गवयपदवाच्यः' इत्यर्थः॥ तेन 'गवयान्तरे शक्तिग्रहाभावप्रसङ्गः' इति दूषणमपास्तम् ॥ तथा च गोसादृश्यविशिष्टपिण्डज्ञानं करणम् । अतिदेशवाक्यार्थस्मरण मवान्तरव्यापारः । उपमितिः फलम्, इति सारम् । तच्चोपमान त्रिविधम्-सादृश्य

---

वृद्धेन घटमानय इत्युक्तं तच्छ्रुत्वा मध्यम वृद्धेन घट आनीतस्तदवधार्य्यसमीगोबालो घटानयन रूपं कार्य्यं घटमानयेति शब्द प्रयोज्यमित्यवधारयति ॥ ५ ॥ एवं वाक्य शेषाद् यथा = वसन्ते सर्वसस्यानां जायते पत्रशातनम् ॥ मोदमानाश्च तिष्टान्तियवाः कणशशालिन इति वाक्य शेषाद् दीर्घ शूक विशेषे शक्तिर्निर्णीयते ॥ ६ ॥ एवं विवरणादपि ॥ विवरणंतु तत्समानार्थ पदान्तेरण तदर्थ बोधनम् यथा घटोऽस्तीत्यस्य कलशोऽस्तीत्यनेन विवरणाद् घट पदस्य कलसे शक्तिग्रहः ॥ ७॥ एवं प्रसिद्ध पद सानिध्यादपि = यथा इह सहकारतरौ मधुरं पिकोरौतीत्यादौ सहकारतरुपदसानिध्यात् पिकपदशक्तिग्रहः इति ॥ ८ ॥

विशिष्टपिण्डज्ञानम्, असाधारणधर्म विशिष्टपिण्डज्ञानम्, वैधर्म्यविशिष्टपिण्डज्ञानं च ॥ तत्राद्यमुक्तमेव द्वितीयं यथा 'खड्गी मृगः कीदृक्' इति पृष्टे 'नासिकालसदेकशृङ्गो ऽनातिक्रान्तगजाकृतिश्च' इति तज्ज्ञातृभ्यः श्रुत्वा कालान्तरे तादृशपिण्डं पश्यन्नतिदेशवाक्यार्थं स्मरति तदनतरं 'खड्ग' मृगः खड्गपदवाच्यः इत्युपमितिरुत्पद्यते' अत्र 'नासिकालसदेकशृङ्गः' इत्यसाधारणधर्मः ॥ तृतीयं यथा–उष्ट्रः कीदृक् इति पृष्टे 'अश्वादिवदसमानपृष्टो न ह्रस्वग्रीव शरीरश्च' इति आप्तोचरिते कालान्तरेण तत्पिण्डदर्शनाद्वैधर्म्यविशिष्टपिण्डज्ञानम्, ततो ऽतिदेशवाक्यार्थस्मरणम्, ततः 'उष्ट्र इष्ट्रपदवाच्यः' इत्युपमितिरुत्पद्यते ॥

इत्युपमाननिरूपणम् ॥

**आप्तवाक्यं शब्दः॥ आप्तस्तु यथार्थवक्ता ॥ वाक्यं पदसमूहः । यथा-'गामानय' इति ॥ शक्तं पदम्॥ 'अस्मात्पदादयमर्थो बोद्धव्यः' इतीश्वरसंकेतः शक्तिः ॥**

(न्यायबो) शब्दं लक्षयति–आप्तेति ॥ पदज्ञानं कारणम् वृत्तिज्ञानकृतपदज्ञानजन्यपदार्थोपास्थितिर्व्यापारः।वाक्यार्थज्ञानं फलम्, तच्छाब्दबोधः ॥ वृत्तिर्नामशक्तिलक्षणान्यतररूपा॥शक्तिर्नाम घटादिविशेष्यकघटादिपदजन्यबोधविषयत्वप्रकारक ईश्वरसंकेतः ॥ ईश्वरसंकेतोनामेश्वरेच्छा। सैव शक्तिरित्यर्थः ॥ शक्तिनिरूपकत्वमेव पदे शक्तत्वम्॥ विषयतासंबन्धेन शक्त्याश्रयत्वं शक्यत्वम् ॥ शक्यसंबन्धो

लक्षणा ॥ साद्विधा-गौणी शुद्धा चेति ॥ गौणी नाम सादृश्य-विशिष्टलक्षणा ॥ यथा--'सिंहो माणवकः' इत्यादौ सिंहपदस्य सिंहसादृश्यविशिष्टे लक्षणा ॥ शुद्धा ऽपि द्विविधा—जह-ल्लक्षणा अजहल्लक्षणे चेति ॥ लक्ष्यतावच्छेदकरूपेण लक्ष्य-मात्रबोधप्रयोजिका जहल्लक्षणा ॥ यथा गङ्गायां 'घोषः' इत्यत्र गङ्गापदवाच्यप्रवाहसंबन्धस्य तीरे सत्त्वात्तादृशशक्य-संबन्धलक्षणाज्ञानात् गङ्गापदात्तीरोपस्थितेः ॥ लक्ष्यताव-च्छेदकरूपेण लक्ष्यशक्योभयबोधप्रयोजका अजहल्लक्षणा यथा—काकेभ्यो दधि रक्ष्यताम्' इत्यत्र काकपदस्य दध्युप-घातके लक्षणा ॥ लक्ष्यतावच्छेदकत्वं दध्युपघातकत्वे तेन रूपेण दध्युपघातकानां काकविडालकुक्कुरादीनां शक्य-लक्ष्याणां सर्वेषां बोधात् ॥ जहद [१]जहल्लक्षणा वेदान्तिमते॥

[पदकृ०] अवसरसंगतिमभिप्रेत्योपमानानन्तरं शब्दं लक्षयति—आप्तेति ॥ शब्द इति ॥ शब्दप्रमाणमित्यर्थः ॥ भ्रान्तविप्रलम्भकयोर्वाक्यस्य शब्दप्रमाणत्ववारणाय 'आप्त' इति ॥ ननु 'कोऽयमाप्तः' इत्यत आह—आप्तस्त्विति ॥

---

१ अयम्भावः तत्र विशिष्ट वाचकः शब्द एकदेशं विहाय एकदेशे वर्तते तत्र जहदजहल्लक्षणाभवति यथा सोयं देवदत्त इति ॥ अत्र च पद द्वय वाच्ययोर्विशिष्टयोरैक्यानुपपत्यापदद्वय-स्यविशेष्य मात्र परत्वम् यथावातत्वमसीत्यादौ तत्पदवाच्यस्य सर्वज्ञत्वादि विशिष्टस्यत्वं पद वाच्येनांतः करण विशिष्टेनैक्या-योगादैक्य सिद्ध्यर्थमुपाधि द्वय विनिर्मुक्ते चिन्मात्रे लक्षणेति वेदान्तविदः ॥

यथार्थवक्ता यथाभूताबाधितार्थोपदेष्टा ॥ वाक्यं लक्षयति वाक्यमिति । घटादिसमूहवारणाय 'पद' इति । शक्तमिति 'निरूपकतासंबन्धेन शक्तिविशिष्टम्' इत्यर्थः ॥ अस्मादिति 'घटपदाद्घटरूपोऽर्थो बोद्धव्यः' इतीश्वरेच्छैव शक्तिः' इत्यर्थः॥ अर्थस्मृत्यनुकूलपदार्थसंबन्धत्वं तल्लक्षणम् ॥ शक्तिरिव लक्षणाऽपि पदवृत्तिः' ॥ अथकेयं लक्षणा—शक्यसंबन्धो लक्षणा ॥ सा च त्रिधा—जहदजहज्जहदजहद्भेदात् ॥ वर्तते च 'गङ्गायां घोषः' इत्यत्र गङ्गापदशक्यप्रवाहसंबन्धस्तीरे ॥ लक्षणाबीजं च तात्पर्यानुपपत्तिः ॥ अत एव प्रवाहे घोषतात्पर्यानुपपत्तेस्तीरे लक्षणासेत्स्यति ॥ 'छत्रिणो यान्ति इत्यादौ द्वितीया ॥ सो ऽयमश्वः, इत्यादौ तृतीया ॥

**आकाङ्क्षा(१)योग्यता संनिधिश्च वाक्यार्थ**

---

१ आकांक्षा योग्यतादि युक्तस्थले च शाब्द बोध प्रकार इत्थम् ॥ घटमानयेत्यादौ घटपदार्थस्य घटस्य निष्ठत्व सम्बन्धेनामर्थेकर्मत्वे ऽन्वयः । आङ् पूर्वकनीधातोरानयनमर्थः तत्र निरूपकत्व सम्बन्धेन कर्मत्वस्यान्वयः आख्यातार्थश्च कृतिः तत्रानयनस्यानुकूलतासम्बन्धेनान्वयः ॥ कृतेश्चाश्रयतासम्बन्धेन पुरुषेऽन्वयः तथाच घट निष्ट कर्मतानिरूपकानयनानुकूल कृतिमान् पुरुष इति शाब्दे बोधोभवतीति भावः ॥ एवं हि तण्डुलं पचतीत्यत्र तण्डुल पदेन तण्डुल पदार्थोपास्थितिः द्वितीयया कर्मतारूप फलोपस्थितः वृतित्वं संसर्गः पचधातुनापाकोपस्थितिस्तत्रानुकूलतासंसर्गेण तादृश कर्मत्वान्वयः तत आख्यातेन कृत्युपस्थितिः तत्रचानुकूलतासंसर्गेण तादृशपाकान्वयः ततश्चैत्र पदेन चैत्रो

ज्ञाने हेतुः ॥ पदस्य पदान्तरव्यतिरेकप्रयुक्तान्वयाननुभावकत्वमाकाङ्क्षा ॥ अर्थाबाधो योग्यता ॥ पदानामविलम्बेनोच्चारणं संनिधिः ॥ तथाचाकाङ्क्षादिरहितं वाक्यमप्रमाणम् । यथा 'गौरश्वः पुरुषो हस्ती, इति न प्रमाणम्, आकाङ्क्षाविरहात् । 'वह्निना सिञ्चेत्, इति न प्रमाणम्, योग्यताविरहात् । प्रहरे प्रहरेऽसहोच्चारितानि 'गाम् आनय' इत्यादिपदानि न प्रमाणम्, सांनिध्याभावात् ॥

(न्यायबो०) आकाङ्क्षां लक्षयति—पदस्येति ॥ यत्पद-

---

पस्थितिः तत्राश्रयत्व संसर्गेण तादृश कृतेरन्वयः तेन तण्डुल वृति कर्मतानुकलपाकानुकूल कृत्याश्रयश्चैत्र इति महावाक्यार्थ बोध इति॥ एवं चैत्रेण पच्यते तण्डुल इत्यादौ चैत्र पदेन चैत्रोपस्थितिः तृतीयया।कृत्युपस्थितिः वृतित्वं संसर्गः ततः पच धातुनापाकोपस्थितिः जन्यतासंसर्गः ततः कर्माख्यातेन फलोपस्थितिः जन्यत्वं संसर्गः तण्डुल पदेन च तण्डुल पदार्थोपस्थितिः तत्राश्रयत्व संसर्गेण तादृश फलान्वयः तेन चैत्र वृति कृति जन्यपाकजत्य फलशाली तण्डुल इति महावाक्यार्थ बोध इति ॥ एवं करोतीत्यत्र कृधातुनाकृत्युपस्थितिः आख्यातेन लक्षणयाचाश्रयत्वोपस्थितिः तत्राश्रयत्व संसर्गेण कृत्याश्रयत्वाश्रय इतिबोधः ॥ एवंहि द्वेष्टि यजते जानाति इच्छतीत्यादौ बोध्यमित्यलंशिशूना मत्यायासेनेति ॥

विशेष्यकाव्यवहितोत्तरत्वादिसंबन्धेन यत्पदप्रकारकज्ञान-व्यतिरेकप्रयुक्तो यादृशशाब्दबोधाभावः, तादृशशाब्दबोधे तत्पदे तत्पदवत्त्वम् आकाङ्क्षा । तादृशाकाङ्क्षाज्ञानं शाब्द-बोधे कारणम् ॥ अर्थाबाध इति ॥ 'बाधाभावो योग्यता' इत्यर्थः ॥ 'अग्निना सिञ्चेत्' इत्यत्र सेककरणत्वस्य जला-दिधर्मस्य वन्हौ बाधनिश्चयसत्त्वात्तादृशवाक्याच्छाब्दबोधो न संभवति ॥ आसत्तिं निरूपयति—पदानामिति ॥ अस-होच्चारितानि ॥ विलम्बेनोच्चारितानि ॥

(पदकृ०) पदस्येति ॥ असंभववारणाय 'पदान्तरव्य-तिरेकप्रयुक्त' इति । पुनरसंभववारणाय 'पदान्तर' इति ॥ अर्थेति ॥ आकाङ्क्षावारणाय 'अर्थ' इति ॥ पदाना-मिति ॥ असहोच्चारितेष्वतिव्याप्तिवारणाय 'अविलम्बेन' इति । आकाङ्क्षावारणाय 'पदानाम्' इति ॥ आकाङ्क्षा-दिशून्यस्य वाक्यस्यात्र प्रमाणत्वं निषेधयति–तथा चेति ॥ 'आकाङ्क्षादिकं शाब्दहेतुः' इत्युक्ते चेत्यर्थः ॥ अनाका-ङ्क्षाद्युदाहरणं दर्शयतियथेति ॥

**वाक्यं द्विधा–वैदिकं लौकिकं चेति ॥ वैदि-कमीश्वरोक्तत्वात् सर्वमेव प्रमाणम् । लौकिकं त्वाप्तोक्तं प्रमाणम् । अन्यदप्रमाणम् ॥**

(न्यायबो०) वैदिकम् 'वेदवाक्यम्' इत्यर्थ ॥ इदमुपलक्ष-णम्—वेदमूलकस्मृत्यादीन्यपि ग्राह्याणि ॥ लौकिकं त्विति ॥ आप्तत्वं च प्रयोगहेतुभूतयथार्थज्ञानवत्त्वम् ॥

**वाक्यार्थज्ञानं शाब्दज्ञानम् । तत्करणं शब्दः ॥**

(पदकृ०) 'नन्वेतावता शाब्दसामग्री प्रपञ्चिता, प्रमाविभाजकवाक्ये शाब्दस्याप्युद्दिष्टत्वेन तत्कुतो न प्रदर्शितम्' इत्यत आह—वाक्यार्थेति ॥ शाब्दत्वं च 'शाब्दात्प्रत्येमि' इत्यनुभव सिद्धा जातिः ॥ शाब्दबोधक्रमो यथा—'चत्री ग्रामं गच्छति' इत्यत्र 'ग्रामकर्मकगमनानुकूलवर्तमानकृतिमान्' इति शाब्दबोधः ॥ द्वितीयायाः कर्मत्वमर्थः, धातोर्गमनम्, अनुकूलत्वं च संसर्गमर्यादया भासते, लटो वर्तमानत्वम्, आख्यातस्य कृतिः, तत्संबन्धः संसर्गमर्यादया भासते ॥ 'रथो गच्छति' इत्यत्र 'गमनानुकूल व्यापारवान् रथः' इति शाब्दबोधः ॥ 'स्नात्वा गच्छति' इत्यत्र गमनप्रागभावावच्छिन्नकालीनस्नानकर्ता गमनानुकूलवर्तमानकृतिमान्' इति शाब्दबोधः ॥ क्त्वाप्रत्ययस्य कर्ता पूर्व कालीनत्वं चार्थः ॥ एवमन्यत्रापि वाक्ये बोध्यम् ॥

इति शब्दनिरूपणम् ॥

**अयथार्थानुभवस्त्रिधा-संशयविपर्ययतर्कभेदात्॥ एकस्मिन्धर्मिणि विरुद्धनानाधर्मवैशिष्ट्यज्ञानं संशयः(१)। यथा-'स्थाणुर्वा पुरुषो वा' इति ॥**

---

(१) सच संशयो ऽपि साधारण धर्मधी जन्यत्वेनासाधारण धर्मधी जन्यत्वेन विप्रतिपत्ति जन्यत्वेन च त्रिविधोभवति = कोटि द्वय स्मरण पूर्वकं विशेषादर्शनं संशय मात्रे हेतुः अत्राद्यस्य मूले एवोदाहरणं साधारण धर्मत्वञ्च तत्र पुरुषत्व निश्चायककरादिमत्वं = स्थाणुत्व निश्चायक वक्र कोटिरादिमत्वमिति ॥ द्वितीयो

(न्यायबो) यथार्थानुभवं निरूप्यायथार्थानुभवं विभजते- संशय इत्यादिना ॥-एकेति ॥ 'एकधर्मावच्छिन्न विशेष्यता- निरूपितभावाभावप्रकारकं ज्ञानं संशयः' ॥ भावद्वयकोटिक- संशयाप्रसिद्धेः 'स्थाणुर्वा' इत्यत्र स्थाणुत्वस्थाणुत्वाभाव- पुरुषत्व पुरुषत्वाभाव(एक) कोटिक एव ॥

(पदकृ०) अयथार्थानुभवं विभजते—अयथार्थेति । संशयं लक्षयति एकेति ॥ 'एकस्मिन्धर्मिण्येकस्मिन्पुरोवर्तिनि पदार्थे विरुद्धा व्याधिकरणा नानाधर्माः स्थाणुत्वपुरुषत्वादयस्तेषां वैशिष्ट्यं संबन्धः, तदवगाहि ज्ञानं संशयः' इत्यर्थः ॥ घटपटौ इति समूहालम्बनज्ञानस्य घटत्वपटत्वरूपाविरुद्धनानाधर्म- वैशिष्ट्यावगाहित्वादतिप्रसक्तिवारणाय 'एकस्मिन्निति ॥ 'घटः पृथिवी' इति ज्ञानस्यैकस्मिन्धर्मिणि घटे घटत्वपृथि- वीत्वरूपनानाधर्मवैशिष्ट्यावगाहित्वादतिप्रसङ्गवारणाय वि- रुद्ध इति ॥ 'घटत्वाविरुद्धपटत्ववान्पटः इति ज्ञानेऽतिप्रसक्ति- वारणाय नाना इति ॥

## मिथ्याज्ञानं विपर्ययः ॥ यथा शुक्तौ 'र- जतम्' इति ॥

(न्यायबो०)मिथ्याज्ञानतिति॥ 'अयथार्थज्ञानम्' इत्यर्थः॥ विपर्ययो नाम भ्रमः इत्यर्थ ॥

(पदकृ०) मिथ्येति ॥ यथार्थज्ञानवारणाय 'मिथ्या इति । अयथार्थवारणाय 'ज्ञान' इति ॥ (ज्ञानेति)

---

यथा शब्दत्वं नित्यानित्य व्यावृत्तं शब्द मात्र वृत्तीति ज्ञाने शब्दो नित्योनवेति संशयः तृतीयो यथा प्रमाण्यं स्वतोग्राह्यंच परतोवेदि संशयः इति ॥

व्याप्यारोपेण (१)व्यापकारोपस्तर्कः ॥ यथा 'यदि वह्निर्नस्यात् तर्हि धूमोऽपि न स्यात्' इति ॥

(न्यायबो) व्याप्यारोपेणेति ॥ तर्के(२)व्याप्यस्य व्यापकस्य च व्यतिरेकाविधनिश्चयः कारणम् ॥ अन्यथा(३) बाधनिश्चयाभावे इष्टा(४) पत्तिदोषेण तर्का(५) नुत्पतेः ॥

(पदकृ०) व्याप्येति ॥ असंभववारणाय 'व्याप्यारो-

---

१ व्याप्यस्यारोप आहार्य्य ज्ञानम् तच्च बाध कालीनेच्छाजन्यं तेनापाद्यो योव्यापकस्यारोपः सतर्क इत्यर्थः उदाहरणञ्च यदि वन्हिर्नस्यादिति अत्राहि वन्हच्यभावरूप व्याप्यस्यारोपेण व्यापको धूमाभाव आरोप्यते व्यापकत्वमधिकदेश वृतित्वम् ॥ व्याप्यत्वञ्चाल्प देशवृतित्वम् ॥ अस्ति चैतदयो गोलकाधिकरण वृति सत्वा सत्वेन धूमाभाव वन्हच्यभावयोरिति ॥ एतादृश रूपेणास्य विषय परिशोधकत्वम् ॥ व्यभिचार संशय निवर्तकत्वं तु यदि धूमो वह्निव्यभिचारीस्यात्तदा वह्नि जन्योनस्यादित्येतादृश रूपेणेति = अत्रापि वह्नि व्यभिचारित्वं वह्नि जन्यत्वाभाव व्याप्यत्वमिति बोध्यम् ॥

२ अयम्भावः यदि वह्निर्नस्यात्तर्हि धूमो ऽपि नस्यादित्यादि स्थले व्याप्यस्य वह्न्य भावस्य व्यापकस्य धूमाभावस्य च व्यतिरेकविध निश्चयो धूम सत्वेन वह्निसत्वनिश्चयः कारणमित्यर्थ ॥

३ आहार्य्यज्ञान रूपव्याप्यव्यापकयोर्विपरीत बाधनिश्चयाभावे ॥

४ धूमो ऽपिमाभवत्विवितीष्टापाति दोषेणेत्यर्थः ॥

५ तर्कस्वरूपानुपपत्तेरित्यर्थः ॥

पेण इति । पुनरसंभववारणाय 'व्यापकारोपः इति । अत्र वह्न्यभावो व्याप्यः, धूमाभावो व्यापकः यद्यपि तर्कस्य विपर्ययात्मकत्वेन पृथग्विभागोऽनुचितः । तथापि प्रमाणानुग्राहकत्वात् स उदितः, इति बोद्धव्यम् ॥ स्वप्नस्तु पुरीतद्बहिर्देशान्तर्देशयोः संधौ सिधेनाड्यां वा मनसि स्थिते, अदृष्टविशेषेण धातुदोषेण वा जन्यते । स च मानसविपर्ययान्तर्भूतः ॥

**स्मृतिरपि द्विधा-यथार्था, अयथार्था च ॥ प्रमाजन्या यथार्था। अप्रमाजन्या ऽयथार्था ॥ सर्वेषामनुकूलवेदनीयं सुखम् ॥**

(न्यायबो०) सुखं निरूपयति-अनुकूलेति ॥ 'इतरेच्छा(१) नधीनेच्छाविषयत्वम् इति निष्कर्षः ॥ यथाश्रुते-अनुकूलत्वप्रकारकवेदनीयत्वस्य (वेदनाविशेष्यत्वस्य)'घटोऽनुकूलः' इत्याकारकज्ञानदशायामनुकूलप्रकारकज्ञानविशेष्यत्वस्य घटादावपि सत्वाद्घटादावतिव्याप्तिः'–इति निनिष्कृष्टलक्षणमुक्तम् ॥ भोजनदावतिव्याप्तिवारणाय 'इतरेच्छानधीन इतीच्छाविशेषणम् । सुखेच्छायाः सुखत्वप्रकारकज्ञानमात्रजन्यत्वात् ॥

(पदकृ०) सुखं निरूपयति-सर्वेषामिति ॥ 'सर्वात्मनाम्, अनुकूल' इति वेद्यं यत् 'तत्सुखम्' इत्यर्थः ॥ 'अहंसुखी' इत्यनुभवसिद्धसुखत्वजातिमद् धर्ममात्रासाधारणकारणगुणे वा सुखम् ॥ शत्रुदुःखवारणाय 'सर्वेषाम्' इति ॥

---

१ सुखं विहाय सर्वत्र धनधान्यादौ सुखेच्छाधीनेच्छा विषयत्वं सुखेचान्येच्छानधीनेच्छा विषयत्वं नहि सुखमप्यन्यार्थमपेक्षते इति भावः ॥

प्रतिकूलतया वेदनीयं दुःखम् ।

(न्यायबो०) दुःखं निरूपय त-प्रतिकूलेति ॥ अत्रापि इतरद्वेषानधीनद्वेषविषयत्वम्" इति निष्कृष्टलक्षणम् द्वेषविषयत्वमात्रोक्तौ सर्पादावतिव्याप्तिः, तद्वारणाय 'इतरद्वेषाधीन–' इति द्वेषविशेषणम् ॥ सर्पजन्यदुःखादौ द्वेषात् सर्पेऽपि द्वेषः, इति सर्पस्य सर्पजन्यदुःखजन्यद्वेषविषयत्वात् । अन्यद्वेषाधीन. द्वेषविषयत्वरूपदुःखलक्षणस्य सर्पादौ नातिव्याप्तिः ॥ फलेच्छा उपायेच्छां प्रति कारणम् । अतः फलेच्छावशादुपायेच्छा भवति ॥ एवं फले द्वेषादुपाये द्वेषः ।

(पदकृ०) प्रतिकूलेति ॥ दुःखत्वजातिमद् अधर्ममात्रासाधारणकारणगुणो (वा) दुःखम् ॥ पदकृत्यं पूर्ववत् ॥

इच्छा कामः ॥ क्रोधो द्वेषः ॥ कृतिः प्रयत्नः ॥

(पदकृ०) इच्छां निरूपयति—इच्छेति ॥ 'कामः' इति पर्यायः ॥ इच्छात्वजातिमती-इच्छा ॥ सा द्विधा—फलेच्छा उपायेच्छा च ॥ फलम् सुखादिकम् । उपायो यागादिः ॥ द्वेषं निरूपयति—क्रोध इति ॥ 'द्वेष्मि इत्यनुभवसिद्धद्वेषत्वजातिमान् द्विष्टसाधनताज्ञानजन्यगुणो वा द्वेषः ॥ प्रयत्नं निरूपयति कृतिरिति ॥ प्रयत्नत्वजातिमान् प्रयत्नः ॥ स त्रिविधः प्रवृत्तिनिवृत्तिजीवनयोनिभेदात् ॥ इच्छाजन्यो गुणः प्रवृत्तिः ॥ द्वेषजन्यो गुणो निवृत्तिः ॥ जीवनादृष्टजन्यो गुणो जीवन योनिः ॥ स च प्राणसंचारकारणम् ॥

विहितकर्मजन्यो धर्मः ॥ निषिद्धकर्मजन्योऽधर्मः ॥

(न्यायबो०) धर्माधर्मौ निरूपयति—विहितेति ॥ 'वेद-विहित इत्यर्थः ॥ निषिद्धेति ॥ 'वेदनिषिद्ध' इत्यर्थः ॥

(पदकृ०) धर्ममाह—विहितेति ॥ 'वेदविहित—' इत्यर्थः ॥ अधर्मवारणाय 'वेदविहित—' इति ॥ यागादि-क्रियावारणाय 'कर्मजन्यः' इति ॥ स च कर्मनाशाजलस्प-र्शकीर्तन—भोग—तत्त्वज्ञानादिना नश्यति ॥ अधर्मलक्ष-णमाह—निषिद्धेति ॥ 'वेदेन' इत्यर्थः ॥ धर्मवारणाय 'वेदनिषिद्ध इति । निषिद्धक्रियावारणाय 'कर्मजन्यः इति ॥ स च भोगप्रायश्चित्तादिना नश्यति ॥ एतावेव 'अदृष्टम्' इति कथ्यते, वासनाजन्यौ च ॥ वासना च विलक्षणसंस्कारः ।

**बुद्ध्यादयोऽष्टावात्ममात्रविशेषगुणाः । बुद्धीच्छाप्रयत्ना नित्या अनित्याश्च । नित्या ईश्वरस्य । अनित्या जीवस्य ।**

(न्यायबो०) बुद्ध्यादयोऽष्टाविति ॥ बुद्धिसुखदुःख-द्वेषप्रयत्नधर्माधर्मसंस्कारा इत्यर्थः ॥

**संस्कारस्त्रिधा—वेगो भावना स्थिति-स्थापकश्चेति ॥ वेगः पृथिव्यादिचतुष्टयमनो-वृत्तिः ॥ अनुभवजन्या स्मृतिहेतुर्भावना—आत्ममात्रवृत्तिः ॥ अन्यथाकृतस्य पुनस्तद-वस्थापादकः स्थितिस्थापकः कटादिपृथिवी-वृत्तिः ॥ इति गुणाः ॥**

(न्यायबो०) संस्कारं विभजते—संस्कार इति ॥ भा-वनां लक्षयति । अनुभवेति । अनुभवजन्यत्वे सति स्मृति

हेतुत्वं भावनाया लक्षणम् ॥ अत्रानुभवजन्यत्वे सतीति विशेषणानुपादाने आत्ममनः संयोगे ऽतिव्याप्तिः आत्ममनः संयोगस्य ज्ञान मात्रं प्रत्य समवायिकारणत्वेन स्मृतिं प्रत्यपिकारणत्वादतस्तदुपादानम् । आत्ममनः संयोगस्यानुभवजन्यत्वाभावान्नाति व्याप्तिः तावन्मात्रे कृते ऽनुभव ध्वंसे ऽतिव्याप्तिः ध्वंसप्रतिप्रतियोगिनः कारणत्वेनानुभवध्वंसस्याप्यनुभवजन्यत्वादतः स्मृतिहेतुत्वोपादानम् अनुभव ध्वंसे स्मृति हेतुत्वाभावान्नाति व्याप्तिरिति ॥

(पदकृ०) संस्कारं विभजते—संस्कार इति ॥ सामान्यगुणात्मविशेषगुणोभयवृत्तिगुणत्वव्याप्यजातिमान् संस्कारः ॥ घटादिवारणाय 'गुणत्वव्याप्य' इति । संयोगादिवारणाय 'आत्मविशेषगुणोभयवृत्ति' इति ज्ञानादिवारणाय 'सामान्यगुण' इति ॥ द्वितीयादिपतनासमवायिकारणं वेगः॥ रूपादिवारणाय 'द्वितीयादिपतन' इति । कालादिवारणाय 'असमवायि' इति ॥ भावनां लक्षयति—अनुभवेति ॥ आत्मादिवारणाय प्रथमदलम् । अनुभवध्वंसवारणाय द्वितीयदलम् ॥ स्थितिस्थापकमाह—अन्यथेति ॥ पृथिवीमात्रसमवेतसंस्कारत्वव्याप्यजातिमत्त्वं स्थितिस्थापकत्वम् ॥ गन्धत्वमादाय गन्धे ऽतिव्याप्तिवारणाय 'संस्कारत्वव्याप्य' इति । भावनात्वमादाय भावनावारणाय 'पृथिवीसमवेत' इति । स्थितिस्थापकरूपान्यतरत्वमादाय रूपवारणाय 'जाति' इति ॥ इति गुणा इति ॥ द्रव्यकर्मभिन्नत्वे सति सामान्यवान् गुणः ॥ द्रव्यकर्मणोरतिव्याप्तिवारणाय विशेषणदलम् । सामान्यादावतिव्याप्तिवारणाय विशेष्यदलम् ॥

**चलनात्मकं कर्म ॥ ऊर्ध्वदेशसंयोगहेतुरुत्क्षेपणम् ॥ अधोदेशसंयोगहेतुरपक्षेपणम् ॥**

शरीरसंनिकृष्टसंयोगहेतुराकुञ्चनम् ॥ विप्रकृष्टसंयोगहेतुः प्रसारणम् ॥ अन्यत्सर्वं गमनम् ॥

(न्यायबो०) कर्म निरूपयति—चलनात्मकमिति ॥

(पदकृ०) चलनेति ॥ संयोगभिन्नत्वे सति संयोगासमवायिकारणं कर्म ॥ हस्तपुस्तकसंयोगवारणाय सत्यन्तम् । घटादिवारणाय विशेष्यदलम् ॥ ऊर्ध्वेति ॥ अपक्षेपणवारणाय 'ऊर्ध्व' इति । कालादिवारणाय 'असाधारण' इत्यपि बोद्धव्यम् ॥ अधोदेशेति ॥ उत्क्षेपणवारणाय 'अधोदेश' इति । कालादिवारणाय 'असाधारण' इत्यपि देयम् ॥ शरीरेति ॥ प्रसारणादिवारणाय 'शरीरसंनिकृष्ट' इति । कालादिवारणाय 'असाधारण (पद)म्' देयम् ॥ विप्रकृष्टेति ॥ उत्क्षेपणादिवारणाय 'विप्रकृष्ट' इति । कालादिवारणाय 'असाधारण (पद)म्' अप्यावश्यकम् ॥

नित्यमेकमनेकानुगतं सामान्यम् ॥ द्रव्यगुणकर्मवृत्ति । परं सत्ता । अपरं द्रव्यत्वादि ॥

(न्यायबो०) सामान्यं निरूपयति—नित्यमेकमनेकानुगतमिति ॥ नित्यत्वे सत्यनेकसमवेतत्वं जातेर्लक्षणम्'—इत्यर्थः ॥ नित्यत्वविशेषणानुपादाने अनेकसमवेतत्वमात्रोपादाने संयोगादावतिव्याप्तिः, तत्राप्यनेकसमवेतत्वस्य सत्वात् ॥ अनेकसमवेतत्वानुपादाने नित्यत्वमात्रोपादाने आकाशादावतिव्याप्तिः, तद्वारणाय 'अनेकसमवेतत्वम्' । अनेकसमवेतत्वानुपादाने नित्यत्वविशिष्टसमवेतत्वमात्रोक्तावाकाशगतैकत्वपरिमाणादौ जलपरमाणुगतरूपादौ चातिव्याप्तिः, जलपरमाणुगतरूपादेराकाशगतैकत्वपरिमाणादे-

नित्यत्वात्, समवेतत्वाच्च अतः 'अनेक' इति समवेतविशेषणम् ॥

(पदकृ०) नित्यमिति । संयोगादिवारणाय 'नित्यम्' इति कालादिपरिमाणवारणाय 'अनेक' इति अनेकानुगतत्वं च समवायेन बोध्यम् । तेन नात्यन्ताभावेऽतिव्याप्तिः ॥

**नित्यद्रव्यवृत्तयो व्यावर्तका विशेषाः ॥**

(न्यायबो०) नित्यद्रव्यवृत्तय इति ॥ नित्यद्रव्येषुपरमाण्वादिषुवर्तमानाः अतएव व्यावर्तकाइतरभेदानुमितिहेतवः नित्यद्रव्यवृत्तित्वरूपपक्षधर्मता प्रयोज्येतरभेदानुमापकताशालिनइत्यर्थः । नित्यद्रव्यनिष्ठविशेष्यतानिरूपितैकमात्र वृत्तिभेदानुमिति जनकतावच्छेदकप्रकारताश्रयत्वंविशेषाणां लक्षणमितिभावः ॥ पार्थिवपरमाणौजलादिभेदानुमापकगंधेति व्याप्तिवारणायैकमात्रवृत्तित्वं भेदविशेषणं ॥ घटादौ तदितरभेदानुमापकेतद्रूपादावति व्याप्तिवारणायानिरूपितांतं प्रकारताविशेषणं । एतेन व्यावर्तकाइत्यस्य नित्यद्रव्यविशेष्यकेतरभेदानुमितिप्रयोजकाइत्यर्थकतयालक्षणपरत्वेन साफल्येपि नित्यद्रव्यवृत्तयइतिविफलमेव स्वरूपाख्या नस्यापि कृतत्वादितिप्रत्युक्तं ॥

(पदकृ०) नित्यद्रव्यवृत्तय इति घटत्वादिवारणाय नित्यद्रव्यवृत्तयः' इति । आत्मत्वमनस्त्ववारणाय 'आत्मत्वमनस्त्वभिन्नत्वे सति' इत्यपि बोद्धव्यम् ॥

**नित्यसंबन्धः समवायः । अयुतसिद्धवृत्तिः । ययोर्द्वयोर्मध्य एकमपराश्रितमेवावतिष्ठते, तावयुतसिद्धौ । यथा अवयवावयविनौ, गुणगु-**

**शिनौ, क्रियाक्रियावन्तौ, जातिव्यक्ती, विशेषनित्यद्रव्ये चेति ॥**

(न्यायबो०) समवायं निरूपयति–नित्येति ॥ संबन्धत्वं विशिष्टप्रतीतिनियामकत्वम् ॥ तावन्मात्रोक्तौ संयोगे ऽतिव्याप्तिः, अतो 'नित्य इति विशेषणम् ॥ ययोर्मध्यइति ॥ यन्निष्ठकालनिरूपिताधेयतासामान्यं यदवच्छिन्नं तदुभयान्यतरत्वमयुतसिद्धत्वमित्यर्थः ।

(पदकृ०) नित्येति ॥ आकाशादिवारणाय 'संबन्धः' इति । सँयोगवारणाय 'नित्य' इति । स्वरूपसंबन्धवारणाय तद्भिन्न इत्यपि ॥

**अनादिः सान्तः प्रागभावः ॥ उत्पत्तेः पूर्वं कार्यस्य ॥**

(न्यायबो०) प्रागभावं निरूपयति—अनादिरिति ॥

(पदकृ०) प्रागभावं लक्षयति–अनादिरिति ॥ घटादिवारणाय प्रथमदलम् । परमाणुवारणाय द्वितीयदलम् ॥ 'पुनः प्रागभावः कस्मिन् काले ऽस्ति' इत्यत आह—उत्पत्तेरिति॥ कार्यस्योत्पत्तेः प्राक् स्वप्रतियोगिसमवायिकारणे वर्तते' इत्यर्थः ॥

**सादिरनन्तः प्रध्वंसः॥ उत्पत्त्यनन्तरं कार्यस्य ॥**

(न्यायबो०) ध्वंसं निरूपयति—सादिरिति ॥

(पदकृ०) ध्वंसं लक्षयति–सादिरिति । घटादिवारणाय 'अनन्तः' इति । आत्मादिवारणाय 'सादिः' इति ॥ उत्पत्तीति ॥ 'कार्यस्योत्पत्त्यनन्तरं स्वप्रतियोगिसमवायिकारणवृत्तिः इत्यर्थः स च 'ध्वस्त' इति प्रत्ययविषयः ॥

त्रैकालिकः संसर्गावच्छिन्नप्रतियोगिताको ऽत्यन्ताभावः ॥ यथा 'भूतले घटो नास्ति' इति ॥

(न्यायबो०) अत्यन्ताभावं निरूपयति—त्रैकालिकेति॥ प्रागभावाप्रतियोगित्वे सति ध्वंसाप्रतियोगित्वे सत्यन्योन्याभावभिन्नत्वे सत्यभावत्वमत्यन्ताभावस्य लक्षणं। ध्वंसप्रागभावान्योन्याभावाकाशाभावादीनां वारणाय यथाक्रमं विशेषणोपादानं। वस्तुतस्तु संसर्गाभावत्वं तादात्म्यभिन्नसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वं ध्वंसप्रागभावयोश्च न संसर्गावच्छिन्न प्रतियोगिताकत्वमिति ते नैव तद्वारणे त्रैकालिकेति स्वरूपाख्यानमेवेति बोध्यं ॥

(पदकृ०) अत्यन्ताभावं लक्षयति—त्रैकालिक इति ॥ 'त्रैकालिकत्वे सति संसर्गावच्छिन्नप्रतियोगिताकोऽत्यन्ताभावः' ॥ ध्वंसप्रागभाववारणाय 'त्रैकालिक' इति। भेदवारणाय 'संसर्ग' इत्यादि ॥

तादात्म्यसंबन्धावच्छिन्नप्रतियोगिताको ऽन्योन्याभावः ॥ यथा 'घटः पटो न' इति ॥

(न्यायबो०) अन्योन्याभावं निरूपयति—तादात्म्येति। अभावत्रयवारणाय विशेषणं घटाभाववान्नेति प्रतीतिविषय घटादि वारणाय विशेष्यम् ॥

(पदकृ०) अन्योन्याभावं लक्षयति-तादात्म्येति। प्रागभावप्रध्वंसाभाववारणाय 'तादात्म्य' इति ॥ अत्यन्ताभाववारणाय तादात्म्यत्वेन तादात्म्यसंबन्धो विशेषणीयः ॥

सर्वेषामेव पदार्थानां यथायथमुक्तेष्वेवान्तर्भावात् 'सप्तैव पदार्थाः' इति सिद्धम् ॥

(न्यायबो०) ननुसादृश्यादीनामतिरिक्त पदार्थानाम-निरूपणेनन्यूनतेत्यत आह सर्वेषामिति ॥ 'प्रमाणप्रमेयसंशयप्रयोजन दृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितंडाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगमः' इति न्यायस्यादिमसूत्र उक्तानां 'प्रमाणप्रमेयादीनाम्' इत्यर्थः ॥ विस्तरस्त्वन्यत्रानुसंधेयः ॥

(पदकृ०) 'पदार्थज्ञानस्य परमप्रयोजनं मोक्षः' इत्यामनन्ति स च आत्यन्तिकैकविंशतिदुःखध्वंसः ॥ आत्यन्तिकत्वं च स्वसमानाधिकरणदुःखप्रागभावासमानकालीनत्वम् ॥ दुःखध्वंसस्येदानीमपि सत्त्वेनास्मदादीनामपि मुक्तत्वापत्तिवारणाय कालीनान्तम् ॥ मुक्त्यात्मकदुःखध्वंसस्यान्यदीयदुःखप्रागभावसमान कालीनत्वाद्वामदेवादीनां मुक्तात्मनामप्यमुक्तत्वप्रसंगात् 'स्वसमानाधिकरण' इति प्रागभावविशेषणम्, दुःखानि चैकविंशतिः शरीरम् षडिन्द्रियाणि, षड्विषयाः, षड्बुद्धयः, सुखं दुःखं चेति ॥ दुःखानुषङ्गित्वाच्च शरीरादौ गौणदुःखत्वम् ॥ तथा च 'आत्मावारे श्रोतव्यो मन्तव्य निदिध्यासितव्यः इति श्रुतेरात्मज्ञानसाधननिदिध्यासनसाधनमननसाधनत्वं पदार्थज्ञाने संजाघटीति ॥ एवं च सति तत्वज्ञाने शरीरपुत्रादावात्मत्वस्वीयत्वाभिमानरूपमिथ्याज्ञानस्य नाशः । तेन दोषाभावः । तेन प्रवृत्त्यनुत्पत्तिः, ततस्तत्कालीनशरीरेण कायव्यूहेन वा भोगतत्त्वज्ञानाभ्यां कर्मणां नाशः ततो जन्माभावः ॥

"नित्यनैमित्तिकैरेव कुर्वाणो दुरितक्षयम् ।
ज्ञानं च विमलीकुर्वन्नभ्यासेन च पाचयेत् ।

अभ्यासात्पक्वविज्ञाने कैवल्यं लभते नरः ॥"

इत्यादिवचनात् "तमेव विदित्वा ऽतिमृत्युमेति" इति श्रुतेश्च सगुणोपासनाकाशीमरणादेरपि तत्त्वज्ञानद्वारा मुक्तिहेतुत्वम् ॥ अत एव 'परमेश्वरः काश्यां तारकमुपादिशति' इति सारम् ॥

काणादन्यायमतयोर्बालव्युत्पत्तिसिद्धये ।
अन्नंभट्टेन विदुषा रचितस्तर्कसंग्रहः ॥१॥

(न्यायबो०) इति श्रीमत्समस्तविद्वन्मुकुटश्रीगोवर्धनकृता तर्कसंग्रहव्याख्या न्यायबोधिनी समाप्ता ॥

(पदकृ०) चक्रे चन्द्रजसिंहो हि पदकृत्यमिदं शुभम् ।
परोपकारकरणं साधवो वीक्षतां परम् ॥१॥

इति श्रीतत्रभवद्(१)गुरुदत्तसिंह शिष्यश्रीचन्द्रजसिंह विरचितं पदकृत्यं समाप्तिमगात् ॥

---

१ तत्र परलोके भवतीति तत्र भवन् सचासौ गुरुदत्तसिंहश्च तत्र भवद्गुरुदत्तसिंह स्तदीय शिष्येण बुद्धसिंहेनेत्यर्थः इत्येनेन मंगलादीनि मंगलमध्यानि मंगलान्तानि च शास्त्राणि प्रथन्ते इति महाभाष्योक्त्याभक्त्या परलोक निवासि स्वगुरोः स्मरण रूपं मंगलं ग्रन्थान्ते दर्शितं भवति अथवा तत्र भवद् शब्दः पूज्य पर्यायः तथाच परम पूज्य गुरु दत्त सिंह शिष्येणेत्यर्थ इतिशम् ।

ज्ञानदीप प्रकाशेन तमोहार्दं निवारयन् ।
स्फोरयेच्छाश्वतं श्रेयः शरण्योनानको गुरुः ॥ १ ॥

इति श्रीनिर्मल पण्डित गोविन्द सिंह साधु कृतं विषमस्थल टिप्पणं समाप्तम् ।

* श्रीशिव अनुग्रहीत *

# सुरती की गोली वो बिबिध मसालों का

## ✻ विनीत विज्ञापन ✻

ग्रांहक वो अनुग्रांहक बृन्द, जानना चाहिये की हँस और बगुलों की पहिचान फकत एक रंगे हुए नोल पञ्जों से नहीं होसकक्ती किंतु दूध और पानी के प्रथक् करने से ही हुआ करती है अतएव सावधान सावधान अनन्तर निवेदन यह है कि हमारे सत्यसंग्रहीत श्रीबृत्ताम्बूलकार्य्यालय का विशेष विख्यात होना देखकर बहुतेरे प्रबंञ्चक व्यापारियों ने बहुतेरी नकलैं निकाल रक्खी हैं उनसे बच कर नीचे की लिखी हुइ असली सब चीजों का विशेष सोच न, करना चाहिए जिस की कीमत और दर यों है, कीमत दर आम गोली फी सेर ८) १६) ३२) ६४) कीमत दर उमदः गोली फी तोला २) ५) १०) इलायची की सुरती फी तोला ॥) १) २) गीली फी तोला ॥) पत्ती फी तोला ॥) विख्यात बीड़े ये पान के बीड़े )। के १ से लेकर ५) के १ तक बनाए जाते हैं। मसाले तम्बूलप्रकास २) तोला ताम्बूलशिरोमणि ।) डिब्बी, ताम्बूलविहार ।) ताम्बूलसुधा, यह बिना चूना कत्था सुपारी आदि के ही काम देने वाली वही तिलिस्मी मसाला है छोटी डिब्बी =) बड़ी ।) डांक व्यय अलग, अतिरिक्त और भी बहुत सी भारतीय चीजैं मांग के बोताबिक यथोचित मूल्य पर भेजी जाती है, अनन्तर विशेष व्याख्यान की व्यवस्था, हमारे बड़े विज्ञापनों से विदित हुआ करती है मंगा देखिए ॥

**विज्ञापक**

**वदलराम जगेशरराम पान प्रबीन,**
**पता वृहत् ताम्बूल कार्य्यालय**
चांदनी चौक का फाटक बनारस सिटी